गंतेर्धर्मश्चांते वा पादांते वापि मार्जयेत् गायत्रीशिरसाचांते मार्जयित्वाघमर्षणं ऋतंचेति तृचस्य माधुच्छंदसोघमर्षणो भाववृत्तमनुष्टुप् अघमर्षणो विनियोगः दक्षिणहस्ते जलं कृत्वा ऋतंचेति ऋक्त्रयं द्रुपदेति ऋचं वा जप्त्वा दक्षिणनासया पापपुरुषं निरस्य तज्जलं नावलोक्य वामभागे क्षितौ क्षिपेत् आचम्य गायत्र्या विश्वामित्रः सविता गायत्री श्रीसूर्यायार्घ्यदाने विनियोगः प्रणवव्याहृतिपूर्वया गायत्र्या तिष्ठन्सूर्योन्मुखः जलांजलिंत्रिः क्षिपेत् कालातिक्रमे प्रायश्चित्तार्थं चतुर्थं असावादित्यो ब्रह्मेति प्रदक्षिणं भ्रमन् जलं सिंचेत् अर्घ्यो जलौ तर्जन्यंगुष्ठयोगो न कार्यः इदमर्घ्यदानं प्रधानमित्येके अंगमितिपरे अथ गायत्रीजपः प्राणायामत्रयं कृत्वा गायत्र्या विश्वामित्रः सविता गायत्री जपे विनि० तत्सवितुर्हृदया० वरेण्यं शिरसे स्वाहा भर्गो देवस्य शिखायै वषट् धीमहि कवचाय हुं धियो यो नो नेत्रत्रयाय वौषट् प्रचोदयात् अस्त्राय फट् इति षडंगन्यासः कार्यः न वा कार्यः न्यासविधेरवैदिकत्वादिति गृह्यपरिशिष्टे स्पष्टं एतेनाक्षरन्यासपदन्यासपादन्यासादीनां मुद्रादिविधेः शापविमोचनादिविधेश्च तांत्रिकत्वेनावैदिकत्वादनावश्यकत्वं वेदितव्यं मंत्रदेवतां ध्यायेत् केचिद्गायत्र्यादिध्यानं वदंति आगच्छ वरदे देवि जपे मे संनिधौ भव गायंतं त्रायसे यस्माद्गायत्री त्वं ततः स्मृता इत्यावाह्य यो देवः सवितास्माकं धियो धर्मादिगोचरे प्रेरयेत्तस्य तद्भर्गस्तद्वरेण्यमुपास्महे इति मंत्रार्थं चिंतयन् मौनी प्रातः सूर्याभिमुखस्तिष्ठन्नामंडलदर्शनात्प्रणवव्याहृतिकाया गायत्र्या अष्टशतमष्टाविंशतिं दश वा जपेत् सायंवाय-

व्याभिमुखः आनक्षत्रदर्शनादितिविशेषः अनध्यायेष्वाविंशतिंप्रदोषेदर्शेवजपेदिकारिकायां रुद्राक्षविद्रुमादिमालाभिरंगुलीः
पर्वभिर्वाजपः अष्टशतंचतुःपंचाशत् सप्तविंशतिर्वामालामधाय: उत्तरन्यासंकृत्वोपस्थानं जातवेदसे० तच्छंयो० नमोब्रह्मणइ-
निमंत्रैः सायंप्रातश्चोपतिष्ठेदितिपराशिष्टमतं स्मृत्यंतरे मित्रस्यचर्षणीत्यादिमित्रदेवताकैः प्रातः इमंमेवरुणेत्यादिभिर्वरु-
णपदोपेतैः सायंसूर्योपस्थानमुक्तं प्राच्यैदिशेइंद्रायनमः आग्नेय्यैदिशेअग्नयेनमः इत्यादिनादशदिग्वंधनांतेसंध्यायैनमः
गायत्र्यैनमः सावित्र्यै० सरस्वत्यैनमः सर्वाभ्योदेवताभ्योन० इति नत्वा उत्तमेशिखरेजातेभूम्यांपर्वतमूर्द्धनि ब्राह्मणैरभ्यनु-
ज्ञातागच्छदेवियथासुखमितिविसृज्य भद्रंनोअपिवातयमनः इतित्रिरुक्त्वाप्रदक्षिणंभ्रमन्नासत्यलोकान् पातालादालो-
कालोकपर्यंतान् येसंतिब्राह्मणादेवास्तेभ्योनित्यंनमोनमः इतिभूम्युपसंग्रहंनमस्कृत्यद्विराचामेदिति अथतैत्तिरीयाणां संक-
ल्पांतंपूर्ववत् गायत्रींध्यात्वा आयातुवरदादेवी अक्षरंब्रह्मसंमितं गायत्रींछंदसांमाते दंब्रह्मजुषस्वमे॥ सर्ववर्णेमहादेवि
संध्याविद्येसरस्वति अजरेअमरेदेवि सर्वदेविनमोस्तुते ओजोसिसहोसिबलमसिभ्राजोसिदेवानांधामनामासिविश्वमसिविश्वायुः
सर्वमसिसर्वायुरभिभूरोम् गायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छंदऋषीनावाहया० श्रियं० ह्रियं० इ-
त्यावात्यमार्जनंपूर्ववत् आपोवाइदꣳसर्वंविश्वाभूतान्यापः प्राणावा आपः पशव आपोन्नमापोमृतमापः संम्राडापोविराड

पः स्वराडापश्छंदः २ स्यापोज्योती २ ष्यापोयजू २ ष्यापः सत्यमापः सर्वादेवताआपोभूर्भुवः स्वराप ॐ इतिजलमभि
मंत्र्य सूर्यश्चेतिपूर्ववन्मंत्रान्मनंदधिक्राव्णो अकारिषमितिऋचमुक्त्वा आपोहिष्ठेतितिसृभिः हिरण्यवर्णाइतिपवमानः
स्ववर्जन इत्यनुवाकेन चऋगतेमार्जनांते अघमर्षणंकृत्वार्घ्यदानादिगायत्रीजपांतमावाहनमंत्रवर्ज्यंपूर्ववत् न्यासविधेर
वैदिकत्वमुक्तमेव जपांतेउपस्थानं मित्रस्यचर्षणी० मित्रोजनान्० प्रसमित्र० यच्चिद्धिते० यत्किंचेदं० कितवासोयत् इतिषड्
रुपस्थायप्राच्यैदिशेयाश्चदेवताएतस्यांप्रतिवसंत्येताभ्यश्चनमोनमइत्यादिना अधरांताः षण्नत्वा आवांतरायैदिशेयाश्च
देवताइतिचनत्वानमोगंगायमुनयोर्मध्य इत्यादिनामुनिदेवान्नत्वास २ स्ववंत्तुदशाइतिमंत्रंपठित्वागोत्राद्युच्चार्यपूर्ववद्भूम्यप
सव्यग्रहनत्वापूर्ववत्संध्यांविसर्जयेदिति अथकात्यायनानांसंध्याप्रयोगः आचम्य भूः पुनातु भुवः पुनातु स्वः पुनातु भूर्भुवः स्वः
पुनात्वित्यादिनापानंकृत्वा अपवित्रःपवित्रोवेति विष्णुस्मृत्वा आसनादिविधिकृत्वाद्विराचम्यप्राणानायम्यपूर्ववत्संकल्प्यगाय
त्रीत्र्यक्षरांबालांसाक्षसूत्रकमंडलुंरक्तवस्त्रांचतुर्वक्त्रांहंसवाहनसंस्थितां ब्रम्हाणींब्रह्मदैवत्यांब्रम्हलोकनिवासिनीं आवाहया
म्यहंदेवीमायांतीं सूर्यमंडलात् आगच्छवरदेदेवित्र्यक्षरेब्रह्मवादिनी गायत्रीछंदसांमातर्ब्रम्हयोनेनमोस्तुतेइत्यावाह्य पूर्वव
दापोहिष्ठेतितृचेनमार्जयेत् सूर्यश्चेतिमंत्रस्य नारायणऋषिः सूर्योदेवता अनुष्टुप्छंदः आचमनेवि० सूर्यश्चेति० जलमास्या

चम्य आपोहिष्ठेतिनवऋक्मार्जनंकुर्यादितिकेचिदाहुः वह्वृचस्तु संकल्पाद्यंतेसूर्यश्चेतिमंत्राचमनंकृत्वापोहिष्ठेतितिसृभिः प्रतिपादंमार्जनं
नेऽघमर्षणंकार्येनतुमार्जनद्वयमित्याहुः ऋतमित्यादिमंत्रस्यार्घमिति द्वयोः भगवानघमर्षणऋषिः आपोदेवता यजुश्छंदः आदानप्रक्षेपणेवि॰ ऋ-
मि आन आप ओषधयः संतुइति जलमादाय दुर्मित्रास्तस्मै संतुयोस्मान्द्वेष्टियंचवयंद्विष्मइतिवामभागेविक्षिपेत् ततऋतंचेतित्र्यृचेन
द्रुपदादिवेतित्रिरुक्तऋचावाघमर्षणंपूर्ववत्सायंप्रातःधिरर्घ्यदानंपुष्पयुक्तं ततःसूर्यंनमस्कृत्यान्तेसप्रदक्षिणंगायत्र्यापरितउक्षणं अथोपस्थानंउद
येमुदुत्यमितिद्वयोः प्रस्कण्वःसूर्योनुष्टुप्गायत्र्यौचित्रंदेवानामांगिरसःकुत्सः सूर्यस्त्रिष्टुप्तच्चक्षुर्दध्यङ्ङाथर्वणःसूर्यःपुरउष्णिक्उपस्थाने॰उ
द्वयंतमसस्परि॰उदुत्यंजातवेदसं॰चित्रंदेवानां॰तच्चक्षुर्देवहितमित्यूर्ध्वबाहुःसूर्यमुदीक्षमाणोजपेत् ततःपठेत्प्राणायामादिविधायन्यासमुद्रातर्प
णादिविधिःकृताकृतः तेजोसीतिपरमेष्ठीप्रजापतिराज्यंयजुःआवाहनेविनियोगः तेजोसिशुक्रमस्यमृतमसिधामनामासिप्रियंदेवानामनाधृ
ष्टंदेवयजनमसि परोरजसइतिविमलःपरमात्मानुष्टुप् गायत्र्युपस्थाने॰ गायत्र्यस्येकपदीद्विपदीत्रिपदीचतुष्पद्यपदसिनहिपद्यसेन
मस्तेतुरीयायदर्शतायपदायपरोरजसेसावदोम् ततो गायत्रीजपानंपूर्ववत् ततः शक्तेनर्विभ्राडित्यनुवाकेनपुरुषसूक्तेनवाशिवसं
कल्पेनवामंडलब्राम्हणेनवोपस्थानंकार्यं अत्रकेचिच्छाखोक्तवनदिग्बंधनंकेचित्कुर्वंति ततउत्तमेशिखरेजा॰देवागातुमितिमंत्रा-
भ्यांविसर्जनंभूम्युपसंग्रहंनमस्कारादिपूर्ववत् इति कात्यायनसंध्या संध्यासुपासतेयेतेनिष्पापाब्रम्हलोकगाः अन्यकर्मफलंनास्तिसं-

ध्याहीनोशुचिस्ततःजीवमानोभवेच्छूद्रोमृतःश्वाजायतेध्रुवंसंध्यात्रयेकालातिक्रमेप्रायश्चित्तार्थमेकमर्घ्यमधिकंदत्वारात्रौप्रहरपर्यंतंदिनोक्त
कर्माणिकुर्यात्ब्रह्मयज्ञंसौरंचवर्जयेत्सर्वथासंध्यालोपेप्रतिसंध्यमेकोपवासोष्टुतमष्टोत्तरसहस्रंवागायत्रीजपः अशक्तौप्रतिसंध्यालोपेशत
गायत्रीजपः अहन्यहल्लोपेतदावृत्तिः ततःपरंकृच्छ्रादिकल्प्यं अथौपासनहोमः स्वयंहोमोमुख्यः अशक्तौपत्नीपुत्रःकुमारीभ्राता
शिष्योभागिनेयोजामाताऋत्विग्वा पुत्रादिर्दंपत्योःसंनिधानेएकसंनिधानेवाजुहुयात् त्यागंयजमानःपत्नीवाकुर्यात् तस्या असं
निधौतदाज्ञयाऋत्विगादिरपि पत्न्यास्तु प्रसवोन्मादादिदोषेतु तदाज्ञांविनापिऋत्विगादिस्त्यागंकुर्यात् स्वयंहोमेफलंयत्स्या
दन्यहोमेतदर्धकं पर्वणितुस्वयमेवजुहुयात् तत्र प्रातः सूर्योदयात्प्राक्सायंसूर्यास्तात्प्राक् अग्नीनांगृत्यास्तेवाप्रादुष्करणंकृ
त्वासूर्योदयास्तोत्तरंहोमःकार्यः प्रादुष्करणकालातिक्रमे ॐ भूर्भुवःस्वः स्वाहेतिमंत्रेणस्रुवाज्याहुतिरूपंसर्वप्रायश्चित्तमाज्यसंस्कारपूर्वकं
कृत्वा होमः सूर्योदयोत्तरंदशघटिकापर्यंतंप्रातर्होमकालोमुख्यः तत आसायंगौणः सायंनवनाडिकापर्यंतंमुख्यः तत आप्रातर्गौणःमुख्य
कालातिक्रमनिमित्तप्रायश्चित्तपूर्वकममुकहोमंकरिष्यइतिसंकल्प्याज्यंसंस्कृत्यस्रुचिचतुर्गृहीतंगृहीत्वासायंकालेदोषावस्तर्नमःस्वाहेति
हुत्वाप्रातस्तुप्रातर्वस्तर्नमःस्वाहेतिहुत्वाहोमंसंस्कृत्यनित्यहोमःश्रौतहोमंकृत्वास्मार्तहोमःकेचित्स्मार्तहोमंपूर्वमाहुः आधानेपुनरा
धानेसायमुपक्रमोहोमःसायंप्रातर्होमयोर्द्रव्यैक्यंकर्त्रैक्यंचप्रातर्यजमानःकृताचेत् कृत्स्नदानदोषाय अथाश्वलायनस्मार्तहोमःआ

च्यमाणानायम्यदेशकालौसंकीर्त्यश्रीपरमे० सायमौपासनहोमंप्रातरौपासनहोमंवामुकद्रव्येणकरिष्ये चत्वारिशृंगेतिध्यात्वासोदक
हस्तेनत्रिः परिसमूह्यपरिस्तीर्यत्रिः पर्युक्ष्यहोमद्रव्यंसमिद्घृतमुत्तरस्थितंदर्भेणाक्त्याल्यमोक्ष्यत्रिः पर्यग्निकृत्वाग्नेः पश्चिमतोदर्भेनि
धाय विश्वानिनइत्यभ्यर्च्यप्रजापतिंमनसाध्यायन् समिधमग्नौप्रक्षिप्य तथैवत्यक्त्वासमिधिदीप्तायांशततंडुलैरग्नयेस्वाहेतिसायंप्रथ
माहुतिः सूर्यायस्वाहेतिप्रातः प्रथमाहुतिः शताधिकतंडुलैः प्रजापतयइतिमनसोच्चार्यहोमत्यागाभ्यांद्वितीयाहुतिरुभयकाले परि
स्तरणंविसृज्यपरिसमूहनपर्युक्षणेकृत्वोपस्थानं अग्नआयूंषीतितिसृणांशतंवैखानसा अग्निः पवमानोगायत्री अग्न्युपस्थानेवि०
अग्नेत्वन्न इतिचतसृणांगोपायनालौपायनावा बंधुःसुबंधुःश्रुतबंधुर्विप्रबंधुश्चाग्निर्द्विपदाविराट् अग्न्युपस्थाने० प्रजापतेहिरण्यगर्भः प्रजा
पतिस्त्रिष्टुप् प्रजापत्युपस्थानेवि० तंतुंतन्वन्देवा अग्निर्जगती यद्वोदेवा प्रजापतिर्जगती उपस्थानेवि० हिरण्यगर्भोहिरण्यगर्भः प्रजाप
तिस्त्रिष्टुप् प्रजापत्युपस्था० इतिवायव्यदेशेतिष्ठन्नुपस्थाय उपविश्यमानस्तोकइत्यादिनाविभूतिधारणंक्वचिदुक्तं विष्णुंस्मृत्वा अनेन होम
कर्मणापरमेश्वरः प्रीयतामित्यर्पयेत् प्रातस्तु सूर्योनोदिवःसूर्यश्चक्षुः सूर्योगायत्री सूर्योप० उदुत्यंकाण्वः प्रस्कण्वः सूर्योगायत्री सूर्योप
स्था० चित्रंदेवानामांगिरसः कुत्सः सूर्यस्त्रिष्टुप् सूर्योप० नमोमित्रस्य सूर्योभितपाः सूर्योजगती सूर्योप० इतिचतुर्भिः पूर्वोक्तैः स्त्रिभिः प्रा ८२
जापत्यैश्चोपस्थानंकेचित्प्रातस्तंतुंतन्वन्नितिनपठंति पत्नीकुमारीकर्तृकहोमेध्यानोपस्थानादौमंत्रावर्ज्याः अथहिरण्यकेशीयानां पू

वोक्तसंकल्पाद्यंतेयथाहतद्धसवइतिपरिसमूह्यपरिस्तीर्य अदितेनुमन्यस्वेतिदक्षिणतः प्राचीनंपर्युक्षेत् अनुमतेनुमन्यस्वेतिपश्चादुदीचीनंस
रस्वतेनुमन्यस्वेतिउत्तरतः प्राचीनंदेवसवितः प्रसुवेतिसर्वतः तूष्णींसमिधमाधायहोमादिप्राग्वत् अदितेन्वमꣳस्थाः अनुमतेन्व॰ सरस्वते
न्व॰ देवसवितः प्रासावीरितिपूर्ववत्परिषेचनं उदुत्यंचित्रंदेवानामितिप्रातरुपस्थानं अग्निर्मूर्धादिवइतित्वामग्नेपुष्करादधीतिद्वाभ्यांसा
यमुपस्थानं आपस्तंबानांसायमग्नयेस्वाहाग्नयेस्विष्टकृतेस्वाहेतिद्वे आहुतीप्रातस्तु सूर्यायस्वाहाग्नयेस्विष्टकृतेस्वाहेतिविशेषःशेषं-
हिरण्यकेशीयवत् अथकात्यायनानां सायमस्तमितेहोमःप्रातः सूर्येनुदितेहोमः तत्रप्रातरुपस्थानांतांसंध्यांकृत्वाहोमांतेगायत्रीजपा
दिसंध्यासमापनं तत्रपूर्ववत्संकल्पांतेउपयमनान्कुशानादायसव्येकृत्वादक्षिणकरेणतिस्रः समिधोग्नावाधायपाणिकोदकेनपर्युक्ष्या
ग्निमर्चयित्वाग्नयेस्वाहा प्रजापतयेस्वाहेतिसायंदध्नातंडुलैर्वाहुत्वाप्रातस्तथैवसूर्यायप्रजापतयेचजुहुयात् समास्त्वेत्यनुवाकेन साय
मुपस्थानंप्रातस्तु विभ्राडित्यनुवाकेन अत्रदधिहोमादौसंस्रवप्राशनमाहुः होमलोपेष्टोत्तरसहस्रगायत्रीजपः मुख्यकालातिक्रमेनादि
ष्टहोमः अथहोमद्रव्याणि व्रीहिश्यामाकयवानांतंडुलाः पयोदधिसर्पिर्यवव्रीहिगोधूमप्रियंगवः स्वरूपेणापिहोम्याः तिलास्तुस्वरूपेणैव
तंडुलादयः शतसंख्याहस्तेनहोतव्याःदध्यादिद्रवद्रव्यंस्रुवेण सर्वत्रोत्तराहुतिभिः पूर्वतोभूयसी समिधश्चार्कपलाशखदिरापामार्गपिप्प
लोदुंबरशमीदूर्वादर्भमयादशद्वादशांगुलाः सत्वचः वटप्लक्षबिल्वादिजाहेमाद्रौ होमाहुत्योः संसर्गेयत्रवेत्थेतिमंत्रेणाग्नयेसमिद्धोमः नि-

स्यहोमेत्वतिक्रांते आज्यंसंस्कृत्यचतुर्गृहीत्वामनोज्योतिर्जुषतामितिजुहुयात् द्वादशदिनपर्यंतंहोमलोपेइदमेवप्रायश्चित्तंततः परमग्निना
शः एवंहोमलोपप्रायश्चित्तंकृत्वातिक्रांतहोमार्थंद्रव्यंसंस्कृत्यसायंप्रातः क्रमेणद्वेद्वेआहुतीदिनगणनयाजुहुयात् अग्निसूर्यप्रजापतीनुप
तिष्ठेन्नवाजुहुयात् प्रायश्चित्तेनचारितार्थ्यात् सूतकादिनाहोमलोपेप्येव हिरण्यकेशीयानामप्येवं आपस्तंबादीनांत्रिरात्रात्परमग्निना
शोभवतीतिस्मृतेर्नकेपिस्त्वयंहोमः कार्यः समारोपोत्तरंसूतकपाते प्रत्यवरोहासंभवेनत्रिरात्रंहोमलोपेपुनराधानं अथसमस्यहोमः सायंप्रा
तर्होमौसमस्यकरिष्ये पूर्ववत्सायंकालहोमांतंकृत्वापर्युक्ष्यपुनर्द्रव्यंसंस्कृत्यसमिधं प्रक्षिप्यसूर्यप्रजापत्याहुतीर्दत्वाहविष्यांतमित्युपतिष्ठे
त् हविष्यांतमितिपंचर्चस्यवामदेवः सूर्यवैश्वानरौत्रिष्टुप् नित्यवत्प्रजापत्युपस्थानं अथपक्षहोमः प्रतिपदि अद्यसायमारभ्यचतुर्दशी
सायमवधिकान्पक्षहोमान्तंत्रेणकरिष्ये सायंतंडुलान्पात्रद्वयेदिनसंख्यानुसारेणचतुर्दशादिवारंगृहीत्वाहोमकालेग्नयेस्वाहेतिसर्वान्पूर्व
पात्रस्थानेकदैवहुत्वाद्वितीयपात्रस्थान्प्रजाप तयेयेवजुहुयात् एवंद्वितीयायांप्रातरद्यावधिपर्वप्रातरवधिकान्पक्षहोमान्तंत्रेणकरि
ष्यइत्यादिसायंवत् विशेषस्तु प्रथमपात्रस्थान् सूर्यायस्वाहेतिजुहुयात् द्वितीयपात्रस्थान् प्रजापतयेहुत्वोभयत्रसमिदेकोपस्थानादिस-
कृत् पक्षमध्ये आपत्प्राप्तौतत्सायंकालाच्चतुर्दशीसायंपर्यंतान् शेषहोमान्सायंपक्षहोमवद्धुत्वापर्वप्रातर्होमांतान् प्रातर्जुहुयात् सर्वथाप
र्वसायंहोमः प्रतिपत्प्रातर्होमश्चपृथगेवइतिपक्षहोमशेषहोमौपक्षमध्येआपन्निवृत्तावपकृष्टाहोमाः पुनः कार्याः संततपक्षहोमत्रये-

ग्निनाशात्तृतीयेपक्षेप्रतिदिनंहोमः सर्वथापत्निहृत्यभावेयावज्जीवंपक्षहोमाः अथसमारोपाः अयंतेयोनिरित्य० अग्निसमा० अनेनमं-
त्रेणहोमोत्तरमरणीमश्वत्थसमिधंवा प्रताप्याग्निसमारोहं तत्रभावयेत् होमादिकाले अरणींनिर्मथ्यप्रत्यवरोहेतिमंत्रेणस्थंडिले
ग्निंप्रतिष्ठापयेत् समित्समारोपेश्रोत्रियागारादग्निंप्रति ष्ठाप्यप्रत्यवरोहेतिमंत्रेणतांसमिधमग्नावादध्यात् सूत्रांतरेआजुह्वानउद्-
ध्यस्वेतिमंत्राभ्यांप्रत्यवरोहणं प्रत्यहंसमारोपादिद्वादशादिनमेव पर्वणिसायंहोमकालपर्यंतंप्रत्यवरोहणाभावेग्निनाशइतिकश्चित्
समारोपप्रत्यवरोहौ यजमानकर्तृकावेव तेनसमारोपोत्तरंपर्वण्याशौचप्राप्तौप्रत्यवरोहासंभवादग्निनाशः एतत्त्रिदिनहोमलोपे
विहितपुनराधानानामापस्तंबादीनामेव आश्वलायनानांतुद्वादशरात्रमध्येपर्वणिप्रत्यवरोहाभावेपिनाग्निनाशः किंतुद्वादशरात्रो-
त्तरंहोमलोपएवेत्यपरे आश्वलायनानांतुद्वादशदिनंहोमलोपएवाग्निनाशः राजक्रांत्यादिसंकटेऋत्विक्द्वारापिसमारोपादिकेचि
द्दर्शिगाद्यभावेनानन्यगतिकत्वेआशौचपातात्पूर्वंपूर्वहोमसहितानपिहोमानपकृष्यकृत्वानकृत्वावासमारोपंकृत्वासूतकांतेप्रत्यवरोहःकार्योनात्र
पर्वोल्लंघनदोषइत्याहुः समारोपोत्तरंदंपत्योः प्रवासेसीमानद्योरुल्लंघनकालेउभाभ्यामन्यतरेणवासमिदाधन्वारंभःकार्यः अन्य-
थाग्निनाशः यजमानस्यैवप्रवासेकृत्यं अभयंवोभयंमेस्त्विति अग्निमुपस्थायप्रवासंगच्छेत् ततआगत्यगृहामाबिभीतोपवः स्वस्त्ये
वोस्मासुचप्रजायध्वंमाचवोगोपतीरिषदितिमंत्रेणस्वगृहंनिरीक्ष्य गृहानहंसुमनसःप्रपद्येवीरघ्नोवीरवतःसुवीरान् इरांवहंतोघृतमु

क्षमाणास्तेष्वहं सुमनाः संविशानीतिगृहं प्रविश्यशिवंशग्मंशंयोरितिपुनस्त्रिरनुवीक्ष्यनित्यहोमांते अभयंवोअभयंमेस्त्वित्यग्निमुपतिष्ठेत्
ज्येष्ठपुत्रशिरः पाणिभ्यांपरिगृह्य अंगादंगात्संभवसीतिमंत्रंजपित्वामूर्धानंत्रिर्जिघ्रेत् एवमितरपुत्राणांप्रत्तकन्यानांतूष्णींजिघ्रेत्
प्रवासादागतंप्रतिज्ञातमपि अप्रियंतद्दिनेनवदेयुः प्रोषितेपत्यौपत्नीस्मार्तहोमोस्वयंकृत्वादर्शपूर्णमासस्थालीपाकपिंडपितृय-
ज्ञान्विप्रेणकारयेत् अनुगतप्रायश्चित्तादिपत्न्यारजस्वलायामपिऋत्विक्कुर्यात् पुनःसंधानंतुपत्यौप्रोषितेनभवेत् नैमित्तिकाजा
तेष्टिगृहदाहेष्ट्यादिपिनभवंति प्रायश्चित्तेष्वेः पूर्णाहुतिः अथोपासनाग्न्यनुगमनेगृह्याग्नेरनुगमप्रायश्चित्तंकरिष्येइतिसंकल्प्यआय-
तनस्थंभस्मदूरीकृत्योपलेपादिकृत्वाग्निंप्रतिष्ठाप्याज्यंसंस्कृत्य अयाश्चेतिमंत्रेणैकामाज्याहुतिंसर्वप्रायश्चित्तंचहुत्वादंपत्योरन्यत
रेणापरहोमकालपर्यंतमुपोषितेनस्थातव्यं एवंद्वादशरात्रपर्यंतंकेचिदुपवासमयाश्चेतिहोमंवाकुर्यात् नद्व्यमित्याहुः एतद्वृत्ति-
कारमतं केचित्तुयद्यग्न्यनुगमनेहोमकालद्वयातिक्रमस्तदानष्टाग्निसंधानं तत्रत्रिरात्रमग्निनाशेप्राणायामशतंततआविंशतिरात्र
मेकदिनोपवासः तत आमावास्यद्वयंत्रिरात्रोपवासः ततऊर्ध्वंसंवत्सरपर्यंतंप्राजापत्यकृच्छ्रं ततः प्रतिवर्षंकृच्छ्रावृत्तिः एवंप्रायश्चित्तं
कृत्वाआधानोक्तसंभारान्निधायनष्टस्यगृह्याग्नेःप्रायश्चित्तंकरिष्येइतिसंकल्प्यायाश्चेत्याज्येनस्रुवाहुतिपत्न्युपवासादिपूर्ववत् ला
जाहोमादिकंवा एवंद्वादशरात्रपर्यंतमग्न्युत्पत्तिरित्याहुः द्वादशदिनोत्तरंविच्छेदप्रायश्चित्तंहोमादिद्रव्यदानंचकृत्वाविवाहहोमा-

दिविधिनायथास्त्वस्वगृह्यं पुनः संधानं अथान्वाहितानाग्नेः प्राक्‌यागादनुगतौ अयाश्चेति पूर्ववदग्निमुत्पाद्य पुनरन्वाधानं कृत्वा भूर्भुवः
स्वरित्युपस्थाय सर्वप्रायश्चित्तं हुत्वा स्थालीपाकं कुर्यात् अन्वाधानोत्तरं प्रयाणप्राप्तौ तुभ्यं ता अंगिरस्तम इत्याज्याहुतिमग्नये हुत्वा स
र्वप्रायश्चित्तं हुत्वाग्निं समारोप्य गच्छेत् समारूढे समिन्नाशे पुनराधेयमिष्यते उपलेपादिकं कृत्वा नष्टाग्निप्रायश्चित्तं पुनराधेयं संकल्प्य आ
धानोक्तसंभारान्निधायाग्निं प्रतिष्ठाप्य अयाश्चेति स्रुवाज्याहुतिं ॥ ॥ सर्वप्रायश्चित्तं च जुहुयादिति पुनराधेयं स्वाग्निक्रमेणान्याग्नौ स्वयं
जनेस्त्वा प्रावन्त्यय जनवा पथिकृत्स्थालीपाकं करिष्ये इति संकल्प्य चरुः कार्योऽथवा पथिकृत्स्थाने पूर्णाहुतिं होष्यामीति संकल्प्य स्रुचि द्वादश
वारं चतुर्वारं वाज्यं गृहीत्वा अग्नये पथिकृते स्वाहेति जुहुयात् विवाहोत्तरं आधानोत्तरं वा पौर्णमास्यां स्थालीपाकारंभः प्रतिपदि यागोऽति
क्रांतश्चेदागामि पर्वपूर्वतिथिषु चतुर्थीनवमीचतुर्दशीद्वितीयापंचम्यष्टमीर्विहाय कार्यं ॥ अत्र कालातिक्रमप्रायश्चित्तं अन्वाधानो-
त्तरं प्रतिपद्दोषस्य करणे तृतीयादितिथिषु सर्वप्रायश्चित्तं हुत्वा पुनरन्वाधाय यागः द्वितीयपर्वप्राप्तौ अतीतेष्टिः पथिकृच्चरुपूर्वकं प-
र्वणि कार्या तत्राप्यतिक्रमो द्वितीयप्रतिपदि लुप्तेष्टेः पादकृच्छ्रं कृत्वा प्राप्तकालयागः द्वितीययागस्यापि आगामितिथिषु लोपे तत्पूर्व-
णि पादकृच्छ्रपथिकृत्पूर्वकं द्वितीययागः तत्राप्यतिक्रमे तृतीयप्रतिपदि अर्धकृच्छ्रं यागद्वयस्य कृत्वा प्राप्तयागः तृतीययागस्यात्य
ति यावदर्धकृच्छ्रं पथिकृत्पूर्वकं चतुर्थपर्वणि वा । करणे अग्निनाशात्पुनराधेयं अत्र पुनराधेयस्वरूपं संभारनिधानपूर्वकमयाश्चेति स्रु.

धर्मसिं. २०

वाज्याहुतिर्निगिन्त्यन्वाम्ब्ध समिन्नाशास्थले उक्तमेव पुनराधानं तु विवाहहोमादिरूपं पुनराधायेयाऽग्निर्नं आयतनाद्बहिः गम्यापरा सान्याकवन्हिपान
इदं तएकस्मिन्मूत्वानमायतनं प्रक्षिप्य सर्वप्रायश्चित्तं जुहुयात् पर्वणि व्रतलोपेऽग्नयेव्रतपतये चरुः पूर्णाहुतिर्नावौ पर्वणि दंपत्योरन्यतरास्तुपाले
भये व्रतभृतेच्चरुः पूर्णाहुतिर्नर्वा अन्वाधानेष्टिमध्ये चंद्रग्रहणे आहर्गोरिति चंद्रायाज्यं हुत्वानवानवदन्त्यपस्थाय ध्माधानादियागः सूर्योप
रागे उद्वयमिति सूर्यायाज्यं हुत्वा चित्रं देवानामित्युपस्थानं अन्वाधानोत्तरं स्वभेरेतोविसर्गे इमंमेवरुण तत्त्वायामीति वरुणाय द्वे आज्याहुती
गर्भं धूज्ञा पुनर्मामेतिसात्रमंत्रयोर्जपश्च बुध्यारेतोविसर्गेऽग्निव्रतपतिच्चरुः अन्यदा स्वप्ने रेतोविसर्गे सूर्यनमस्कारत्रयं इध्माधानोत्तरं हवि-
र्दोषे दुष्टस्थाने आज्यं प्रतिनिधिं कृत्वा यागं समाप्य दुष्टं जले त्यक्त्वा अन्वाधानादि स्वदेवताकः पुनर्यागः इध्माधानात्पूर्वं हविर्दोषे तद्देवताकं हु
विः पुनरुत्पाद्य यागः स्विष्टकृदर्थहविर्दोषे आज्येन स्विष्टकृतं कुर्यात् अंगहविर्दोषे तदाज्यं पुनरुत्पाद्यं तत्र हविर्दोषास्तु प्रच्युतनखकेशा-
कीटरक्तास्थिविण्मूत्रश्लेष्माद्यैर्यो मिश्रितेभ्यश्च मार्जारनकुलकाकमुखजलबिंदुघर्मनासिकामलाश्रुकर्णमलैः सूतिकारजस्वलाचांडालादि-
दृष्टिभिश्च संसर्गाः देवताहविर्मंत्रादिविपर्यासे यद्वो देवा इति मन्त्रेण आज्यहोमः कृत्स्न हविर्दाहे तद्ध विरुत्पाद्य स एव यागो न तु पुनर्यागः पूर्वो
दितचतुर्दिक्षु चरुस्कंदे अभयेयमाय वरुणाय सोमायेति क्रमेण हुत्वा सर्वतउत्संके चतुर्भ्योऽपि हुत्वाकोणभूस्कंदे व्यान्हतीर्नाहुत्वा चरुमाप्यायस्व सं-
तेपयांसीति मंत्राभ्यामाज्येनाप्याययेत अग्नौ मिंदाहुतीचंद्र इति केचित् स्वगृह्याग्नेरन्यगृह्याग्निना संसर्गे उभौ यजमानौ युगपत्तमपि संमारो-

पू. प. पू.

भ्योभोमत्यवरोहणंकृत्वाऽग्नयेविविचयेचरुंकुर्यात्शवाग्निनासंसर्गेऽग्नयेशुचयेचरुः पंचनाग्निनासंसर्गेसंव-
र्गायाग्नयेचरुः सर्वत्रसंसर्गेसमारोपप्रत्यवरोहणोत्तरंचरुः स्वयमग्निप्रज्वलनेउद्दीप्यस्वजातवेदो० मानोहिंसीः-
र्जातवेदोगामश्वंपुरुषंजगत् अबिभ्रदग्न आगहिश्रियामापरिपातयेतिद्वाभ्यांहस्समिधावग्नयेजुहुयात् सर्वत्रविध्यपराधेसांगत्वार्थं
सर्वप्रायश्चित्तंगृहदाहेग्नयेक्षामवतेचरुः एवमन्यान्यपिप्रायश्चित्तानिबह्वृचब्राह्मणादिसूक्तानिज्ञेयानि यत्रतुप्रायश्चित्तविशेषोनोक्त-
स्तत्रसर्वप्रायश्चित्तंभूर्भुवःस्वरित्यनेनाज्याहुतेःसर्वप्रायश्चित्तसंज्ञा अथाग्न्यपघातनिमित्तानिश्वसूकररासभकाकसृगालमर्कटशू-
द्रान्त्यजपतितकुणपसूतिकारजस्वलाभिःपुरीषमूत्ररेतोश्रुपूयश्लेष्मशोणितास्थिमांसादिभिरन्यैर्वाजुगुप्सितैरारोपितारणिस्पर्शोग्नि-
स्पर्शोवाग्निनाशः तत्रारणिगतेवह्नौनष्टेपुनराधेयमग्निस्पर्शेपुनराधानं यद्वापुनस्त्वादित्यारुद्रावसवःसमिंधतांपुनर्ब्रह्माणोवसुनीथ
यज्ञैः घृतेनत्वंतनुवोवर्धयस्वसत्याःसंतुयजमानस्यकामाःस्वाहा आदित्यरुद्रवसुभ्यइदंनममेतिसमिद्धोमः स्रुवेणाज्याहुतिर्वा
अग्नौजलापघातेपीदमेव स्वस्थजीविनोमृतशब्दश्रवणेग्नयेसुरभिमतेचरुः पूर्णाहुतिर्वा प्रधानाहुतीनांस्विष्टकृतासंसर्गेसर्वप्राय-
श्चित्तं पिंडपितृयज्ञेऽतिप्रणीतनाशेतत्रा॥ ॥होमपक्षेसर्वप्रायश्चित्तं होमपक्षेपुनःप्रणयनमपि आपस्तंबानांप्रायश्चित्तांतेप्रणय-
नमेवनित्यं पिंडपितृयज्ञलोपेवैश्वानरश्चरुः समहोत्रारव्यमहाहविर्होतेत्यादिमंत्रः पूर्णाहुतिर्वाश्रवणाकर्मसर्पबल्याश्वयुज्या

आग्रयणप्रत्यवरोहणकर्मणामन्यतलोपेप्राजापत्यकृच्छ्रं अकृताग्रयणस्यनवान्नभक्षणेमयैवैश्वानरायचरुः अष्टकालोपेउपवासः पूर्वेद्युः श्राद्धलो-
पेप्युपवासः उपवासप्रत्याम्नायएकविप्रभोजनंवा अन्वष्टक्यालोपेप्येभिर्द्युभिःसुमनाएभि रिंदुभिरितिऋचः शतंजपः सर्वत्रचरुस्थानेपू-
र्णाहुतिः दर्शपूर्णमासानारंभे आलस्यादिना पूर्णाहुतिकरणेतु यागपर्यासंवत्संन्या ज्यदर्यामिनिगृह्याग्निसारेनिषिद्धतिथ्यादौस्वभार्यागमनेप्रा-
याज्ययाजतलक्षालीदिगणिकान्नाद्यभोज्यभोजनेनिषिद्धप्रतिग्रहेपुनर्मामैत्विंद्रियइमेयेधिष्ण्यासइतिद्वाभ्यामाज्यहोमः समिद्धोमोवाज-
पीवागृहोपरिकपोतोपवेशनेदेवाःकपोतइतिपंचर्चसूक्तजपः प्रत्यृचमाज्यहोमोवापाकयज्ञतंत्रेणदुःस्वप्नदर्शनेयोमेराजन्युज्योवेत्यृचासूर्योपस्था-
नं आतुरत्वनाशायवामकैर्नामिर्त्वातिसूक्तेनप्रत्यृचंचरोर्होमः यक्ष्मनाशायेदंनमस्सेनिपंचसूक्तयोगः षष्ठंस्विष्टकृदादि प्रोक्षणीप्रणीता-
स्थजलानांबिंदुपातस्त्रावेवा आपोहिष्ठेतितृचेनपुनः पूरणंतनंमे अपस्तद्गुनायत इत्यृचाज्याहुतिः॥ इध्माधानलोपेतस्याज्यभागोत्तरं
स्मरणेविपर्यासप्रायश्चित्तंकृत्वाध्माधानंचकृत्वाप्रधानयागः प्रधानयागोत्तरंस्मरणेग्निसमिंधनरूपद्वारस्याभावाल्लोपएवेतिप्रायश्चि-
त्तेनैवसिद्धिः अन्यागेष्वप्येवमूह्यं अथाग्निनाशकानि दंपत्योरन्यतरोग्निसमीपेउदयास्तमयकालेवसेत् उभौदंपतीगृहसीमांग्रामसी-
मांवानदींवोल्लंघ्यहोमकालेबहिर्वसेतांनदापुनराधानं अग्नीनामजस्त्रहरणेशाम्यासात्प्रागुच्छ्वासेग्निनाशः कर्मार्थहरणेग्नी-
नांनानुच्छ्वासादिचोद्यते आत्मसमारोपणपक्षेप्स्कमज्जनेमैथुनेशूद्रादिस्पर्शनेग्निनाशः पत्न्यनेकत्वेप्येकस्यामपिहोमकालेगृहसी-

म्नो बर्हिर्गतायामग्निनाशः ज्येष्ठायामग्निसमीपस्थायां कनिष्ठया सह यजमानप्रवासो न दोषाय दंपती उभावपि ग्रामगृहयोः
सीम्नो बहिर्गत्वा होमकालात्पूर्वमागतौ चेन्न दोषः यजमाने ग्निसमीपस्थेपि होमकाले पत्न्या ग्रामांतरस्थितौ पुनराधानमाहुः
प्रवासे न्यतरेण समारूढाग्नेरन्वारंभासत्वे नदीसीम्नोरुल्लंघने पुनराधानं अग्निं विहायय जमानस्य शतयोजने गमने वर्षपर्यं-
तं स्वयं होमाभावे वाग्निनाशः तत्र पुनराधानं पवित्रेष्टिर्वा विनाग्निभिर्यदा पत्नी नदीमंबुधिगामिनीं अतिक्रमेत्तदाग्नीनां विनाशः स्या
त्तथा श्रुतिः अग्निसमीपपत्न्या पत्न्यंतरे वा पत्न्या नदीलंघने दोषा न प्रतिप्रवासे पत्न्या अग्निनाशः सह सीमोल्लंघने ग्निनाशः एवं पत्न्यैरपि
पत्नीप्रवासे जलं न हंतुनाग्निरुपशांतश्चेत्पुनराधेयं तदेव पुनराधेयमग्नावनुगते सति असमाधाय चेत्स्वामी सीमामुल्लंघ्य गच्छति
समारोपणं विनाशस्यापरासादूर्ध्वमग्नीनाहरणे नाशः रजोदोषसमुत्पन्ने सूतके मृतके पि वा प्रवसन्नग्निमान्विप्रः पुनराधानमर्हति ब-
ह्वीनामपि चैकस्यां सुदक्षायां न तु प्रजेत एकादशांतर्नद्यस्तुर्मिच्छन्निमित्ततः नचाग्निहोमवेलायां प्रवसेन्नच पर्वणि होमहूयात्स्य
ये दर्शपूर्णमासात्यये पुनराधेयमापस्तंबविषये पत्नीनाग्नो पच द न्नं सूतके मृतके पि वा अपत्न्या तु वसेद्द्रात्रिं पुनराधानमर्हतीदं का-
त्यायनादिपरं पत्नीप्रवासे पुनराधानमुक्तं तदेकभार्यस्य बहुभार्यस्य तु ज्येष्ठाप्रवास एव पुनराधानमिति केचित् एतेषु निमित्तेषु स्थितानग्नीनु
त्सृज्यान्येषामाधानं आरादुपकारकांगलोपे कर्मसमाप्तेः प्राक् प्रायश्चित्तं कृत्वा तदंगं कुर्यान्न कर्मसमाप्तौ प्रायश्चित्तमेव नांगावृ-

सिं नि: सन्निपत्योपकारकांगस्य द्रव्यसंस्काररूपस्य लोपे प्रधानात्प्राक् तत्कार्यं प्रधानोत्तरं प्रायश्चित्तमेव नावृत्तिः मृतायै पत्न्यै दाहायार्धाग्निं दत्त्वावशिष्टाग्नौ सायंप्रातर्होमस्थालीपाकाग्रयणानि कुर्यात् कौस्तुभे त्वर्धाग्निदानादिकमुक्त्वा विधुरस्यापूर्वाधानप्रकारस्तस्य विच्छेदे पुनराधानप्रकारश्चोक्तः तत्राधानप्रकारो वशिष्टाग्नेः प्राक् होमान्नाशपरः यद्वा श्रौताग्निषु भार्यायै अर्धाग्निदानं कृत्वा उत्सर्गेष्ट्या पूर्वाग्नीन् परित्यज्य पुनराधानं कृत्वाग्निहोत्रं कार्यमित्युक्तं तद्वदत्रापि उत्सर्गेष्ट्या पूर्वाग्नित्यागोत्तरमपूर्वाधानं कौस्तुभे उक्तमिति योज्यमिति भाति अरणिस्रुवादिपात्राणां लक्षणवृक्षादिविचारोन्यत्र ज्ञेयः एतेषां विधीनां संकल्पादिविस्तरस्तूक्तः प्रयोगो गृह्याग्निसागरे प्रायश्चित्तादिविधयः प्रायः सर्वसूत्रेषु समाना एव क्वचित्क्वचित्स्वस्वसूत्रोक्ता विशेषा ऊह्याः विवाहहोमो गृहप्रवेशनीयहोमेन समानतंत्रोनुष्ठीयमानो बह्वृचानां पुनराधानं ॥ अन्येषां विवाहहोमाद्भिन्न एवेति विशेषः अथ कात्यायनोपयोगी किंचिदुच्यते पराग्निपक्वं नाश्नीयाद्गुडगोरसमंतरा आहिताग्नेरयं धर्मो याज्ञिकानां तु संमतः इक्षुक्षीरविकाराश्च धान्यभृष्टयवा अपि पराग्निपक्वं न ज्ञेयं प्रवासे चाग्निहोत्रिणः यदन्नं वारिहीनं च पक्वं केवलपावके तदन्नं फलवद्ग्राह्यमन्नदोषो न विद्यते प्रातर्होमं तु निर्वर्त्य समुद्धृत्य हुताशनात् शेषं महानसे कृत्वा तत्र पाकं समाचरेत् पूर्वेण योजयित्वा तं तस्मिन्होमो विधीयते अतोस्मिन्वैश्वदेवादिकं कुर्यादतंद्रितः बह्वृचकारिकायां ८७
नित्यपाकाय शालाग्नेरेकदेशस्य कार्यतः पाकार्थमुल्मुकं हृत्वा तत्र पक्त्वा महानसे वैश्वदेवोग्न्यगारे स्यात्सा कार्यो मिश्र लौकिकः

भूरिपाकोभवेद्यत्रश्राद्धादावुत्सवेषुच कृतेन्नवैश्वदेवेथलौकिकोनैवकार्यतः दीपकोधूपकश्चैवतापार्थंयश्चनीयते सर्वेतेलौकि
काज्ञेयास्तावन्मात्रापवर्गतः बहुधाविल्हतोत्स्यभिरावसथ्यात्कथंचन यावदेकापितिष्ठेत्तावदन्यानमथ्यते वैश्वदेवात्तथाहो
नान्याकुर्ज्ञेयंनैवमंथनं पचनाग्नावपस्कादः पुनराधानमर्हतिआरोपितारणीचोभाएकावाययदिनश्यति तत्राग्न्याधेयमिच्छंतिपु
नराधेयमेववा अथानारोपितारण्योःक्षयेग्रात्स्येनैवपुनः तदलाभेयदोह्यायाद्यत्रस्यात्पुनराहितिः शूद्रोदक्यांत्यजैश्चैवपतिता
मेध्यरासभैः अनारूढारणिस्पर्शेतेविहायान्ययोग्रहः आरूढारणिस्पर्शेपुनराधेयमुक्तं भवतेनःसमेत्यकमज्जयेहूषिता
रणी एकारण्येवदुश्चचेत्तामेवाप्स्नुनिमज्जयेत् तत्रान्यारणिलाभातप्रागुद्धातेपुनराहितीः उद्धातेअग्नौनष्टे नष्टायामरणौयाव
वदग्निस्तिष्ठतिवेश्मनि तावद्धोमादिकंकृत्वातन्नाशेपुनराहरेत् अत्रेकारणिनाशेन्यामकांमंत्रेणोपादायोभाभ्यांमंथनमिति
केचित् अवशिष्टातामेवछित्वामंथनमित्यपरे एकस्याःदोषेप्यरणिद्वयंत्यक्त्वान्तनद्वयोपादानमितिनारायणवृत्त्याशयः अ
यमरणिविचारःश्रौतस्मार्तसाधारणःसर्वशाखासाधारणश्च अग्निसमारोपप्रकारोयेवैश्वदेवःपाकश्चलौकिकेग्नौकार्यइत्या
हुः यस्यवेदश्चवेदीचविच्छिद्येतेत्रिपुरुषं सवैदुर्ब्राह्मणोज्ञेयःसर्वकर्मसुगर्हितः अग्निहोत्रमकुर्वीतज्ञानवाञ्छ्रद्धयान्वितः
अग्निहोत्रात्परोधर्मोनभूतोनभविष्यति श्रौतेकर्मणिनोशक्तोज्ञानद्रव्याद्यभावतः स्मार्तंकुर्याद्यथाशक्त्यात्राप्याचारंलभंसदा

कृतदारोनतिष्ठेतक्षणमप्यग्निनाविनातिष्ठेन्नचेद्द्विजोव्रात्यस्तु याग्नपतितोभवेत् नगृण्हीयाद्विवाहाग्निंगृहस्थइतिमन्यते अन्नंतस्य



नभोक्तव्यंवृथापाकोह्यसस्मृतः यो दद्यात्काचनंमेरुंपृथिवींचससागरां तत्सायंप्रातर्होमस्यतुल्यंभवतिवानवा अथनित्यदानं
एकस्मिन्नप्यतिक्रांतेदिनेदानविवर्जिते दस्युभिर्मुषितस्येवयुक्तमाक्रंदितुंभृशं तस्माद्विभवानुसारेणधनधान्यादिदेयमसंभवे
पूगीफलादिकमपिप्रत्यहंदेयं ततोगोब्राह्मणादिमंगलदर्शनं इत्यष्टधाविभक्तदिनस्यप्रथमभागकृत्यं द्वितीयभागेवेदशास्त्राभ्या
सः पठेदध्यापयेद्दानंजपंश्चैवविचारयेत् अवेक्षेतचशास्त्राणिधर्मादीनिद्विजोत्तमः देवार्चनमितिप्रातर्होमोत्तरंवाचतुर्थभागे
ब्रम्हयज्ञोत्तरंवाकार्यंविधायदेवतापूजांप्रातर्होमादनंतरंकुर्वीतदेवतापूजांजपयज्ञादनंतरमित्यादिद्विविधस्मृतेः देवार्चनंप्रक
तैर्व्यंत्रिकालेपियथाक्रमं अशक्तौविस्तरात्प्रातर्मध्यान्हेचंदनादितः सायंनीराजनंकुर्यात्त्रिकालेतुलसीदलैः यथासंध्यातथापूजात्रिकाले
मोक्षदास्मृतेतिकमलाकरः तत्रविष्णुशिवब्रम्हसूर्यशक्तिविनायकादिष्वभिमतां देवतामर्चयेत् तत्रापिकलौहरिहरयोःपूजाप्रशस्ता
नविष्ण्वाराधनात्पुण्यंविद्यतेकर्मवैदिकं तस्मादनादिमध्यांतंनित्यमाराधयेद्धरिम् अथवादेवमीशानंभगवंतंसनातनं प्रणवेनाथवारु
द्रगायत्र्यात्र्यंबकेनवा नमोन्नमःशिवायेतिमंत्रेणानेनवायजेत् तत्रापिप्रतिमास्थंडिलादिभ्यःशालग्रामेबाणलिंगेचप्रशस्ता आवाह 
नादिकंविनासदादेवतासंनिधानात् श्रीभागवते उद्वासावाहनेनस्तःस्थिरायामुद्धवार्चने अस्थिरायांविकल्पःस्यात्स्थंडिलेतुभवेद्द्वयं

तत्रसंक्षेपतः पूजाप्रयोग उच्यते विशेषविचारस्तु मूर्तिभेदतिथ्यादिप्रसंगेनवक्ष्यते येभ्योमाता० एवापित्रेविश्वदेवा० इतिपठन् घंटानादं कृत्वा-
ऽभ्यर्चणानामध्येदेशकालादिसंकीर्तनान्तेश्रीमहाविष्णुपूजांकरिष्ये इतिपंचायतनपक्षेश्रीरुद्रविनायकसूर्यशक्तिपरिवृतश्रीमहाविष्णुपू
जांकरिष्ये इतिसंकल्प्यासनादिविधाय सहस्रशीर्षेतिषोडशर्चस्यसूक्तस्यनारायणः पुरुषोनुष्टुप् अंत्यात्रिष्टुप् न्यासेपूजायांविनि० ततः
प्रथमामृचंवामकरे द्वितीयांदक्षिणेन्यसेत् तृतीयांवामपादे चतुर्थींदक्षिणे पंचमींवामजानुनि षष्ठींदक्षिणे सप्तमींवामकटौ अष्टमींदक्षि
णायांनवमींनाभौ दशमींहृदि एकादशींकंठे द्वादशींवामबाहौ त्रयोदशींदक्षिणे चतुर्दशींमुखे पंचदशीमक्ष्णोः षोडशींमूर्ध्नि एवं
देहेन्यस्यदेवेचन्यासंकुर्याद्विधानतः अंत्याभिःपंचभिर्ऋग्भिः हृदयाद्यंगपंचकं कलशशंखघंटाश्चपाद्यार्घ्याचमनीयकं संपूज्यभास्यचात्मा
नंपूजासंभारमेवच ध्यायेदभिमतांविष्णोर्मूर्तिंसंपूजयेत्ततः प्रथमयापुरुषसूक्तस्यर्चावाहनं शालग्रामादौ आवाहनाभावान्मंत्र
पुष्पंकरगंते श्रीमहाविष्णवेश्रीकृष्णायेत्येवमभिमतमूर्तिंचतुर्थ्या हृदयसर्वोपचारार्पणं पंचायतनेतुचतुर्थ्याविष्णवेशिवविनायकसूर्य-
शक्तिभ्यश्चैवंयथोपास्यमुच्चारः नैवेद्यादौपार्थक्याभावेयथांशतइतिवदेत् द्वितीययासनंदद्यात् तृतीययापाद्यं चतुर्थ्यार्घ्यं पंचम्याचा
मनं षष्ठ्यास्नानं संभवेपंचामृतस्नानान्याप्यायस्वेत्यादिमंत्रैः चंदनोशीरकर्पूरकुंकुमागरुवासितजलैः सुवर्णघर्मानुवाकमहापुरुषवि
द्यापुरुषसूक्तराजनसामभिरभिषेकः सप्तम्यावस्त्रं अष्टम्यायज्ञोपवीतं नवम्यागंधं दशम्यापुष्पाणि एकादश्याधूपं द्वादश्यादीपं [illegible]

पंचदीपंचघंटादेर्नादमाचरेत् अथोदश्यानैवेद्यंसंभवेतांबूलफलदक्षिणा चतुर्दश्यानमनं पंचदश्याप्रदक्षिणाः षोडश्याविसर्जनंपुष्पां
जलिर्वास्नानेवस्त्रेचनैवेद्येदद्यादाचमनंतथा दत्वाषोडशाभिर्ऋग्भिः षोडशान्नस्यचाहुतीः सूक्तेन मन्त्रंचपुष्पंदत्वासूक्तेनसंस्तुयात्
ततः पौराणैः प्राकृतैश्चस्तुत्वाशिरोमस्यादयाः कृत्वाबाहुभ्यांचपरस्परं प्रपन्नंपाहिमामीशभीतंमृत्युग्रहार्णवात् इतिपदन्नमेत
निर्माल्यंदेवदत्तंभावयित्वाशिरसिधारयेत् शंखोदकंशिरसिधृत्वा देवतीर्थंपूजांते वैश्वदेवांतेवाशिरसिधार्यंपर्यस्य तत्रक्रमः विप्रपादोद
कंपीत्वाविष्णुपादोदकंपिबेत् शालग्रामशिलातोयमपीत्वायस्तुमस्तके प्रक्षेपणंचकुरुतेब्रह्महासनिगद्यते पात्रांतरेणवैग्राह्यंनकरेण
कदाचनेतिकमलाकरः क्षालनेनएकस्यैववस्त्रस्यप्रतिदिनेदानेदोषोन एवंस्वर्णादिभूषणानामपि सुवर्णमययज्ञोपवीतेप्येवमाचारः
एवंपूजायाःफलंस्कांदे कामासक्तोथवाक्रुद्धः शालग्रामशिलार्चनात भक्त्यावायदिवाभक्त्याकलौमुक्तिमवाप्नुयात् कथांत्यः कुरुतेविष्णोः
शालग्रामशिलाग्रतः वैवस्वतभयंनास्तितथाचकलिकालजं प्रायश्चित्तंहिपापानांकलौपादोदकंहरेः धृतेशिरसिपीतेचसर्वास्तुष्यंतिदे-
वताः विष्णुमूर्ध्निस्थितंपुष्पंशिरसानवहेन्नरः बौधायनोक्तोहरिहरयोःपूजाविधिः पराशरमाधवे मयातुशिवपूजाविधिः॥ ॥शिवरात्रि
प्रकरणेद्वितीयपरिच्छेदेउक्तइतिनेहोच्यते कौर्मे योमोहादथवालस्यादकृत्वादेवतार्चनं भुंक्तेसयातिनरकंसूकरेष्वभिजायते एवंदेवं ८९
संपूज्यमातापितृप्रमुखान्गुरून्पूजयेत् यस्यदेवेपराभक्तिर्यथादेवेतथागुरौइतिमाधवः तृतीयभागेपोष्यवर्गार्थंधनार्जनंयजना-

ध्ययनदानयजनाध्यापनप्रतिग्रहाः षट् विप्रकर्माणि षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका याजनाध्यापने चैव विशुद्धाच्च प्र-
तिग्रहः श्रीभागवते प्रतिग्रहं मन्यमानस्तपस्तेजोयशोनुदं अन्याभ्यामेव जीवेत शिलैर्वा दोषदृक्तयोरिति तथा वार्त्ता विचित्रा शालीनया
यायावरशीलोञ्छनं विविचित्रा वार्त्ता कृष्यादि शालीनम् अयाचितं यायावरं प्रत्यहं धान्याद्याकणिशोपादानं कणोपादानं च शीलोञ्छनं अत्रोत्तरो
त्तरा प्रशस्ता शिलोञ्छनं कलौ निषिद्धं कुसूलकुंभीधान्यो वा त्र्याहिक श्वस्तनो पि वा कुटुंबपोषणे द्वादशाहपर्याप्तधान्यः कुसूलधान्यः षडहपर्याप्तधान्य
कुंभीधान्यः न कुर्यात् कृषिं वाणिज्यं सेवावृत्तिं तथैव च ब्राह्मण्याश्चाप्यनंतेनं तस्मात्तानि विवर्जयेदिति स्मृत्यंतरे वार्त्ता वृत्तिरापद्यपि यथा पुत्रमांसं
वरं भोक्तुं न तु राजप्रतिग्रह इति वाक्यमधर्मवर्त्तिराजप्रतिग्रहविषयं वृद्धांश्च मातापितरौ साध्वीं भार्यां सुतः शिशूंश्चायाज्ययाजनशूद्रप्र-
तिग्रहादिनापि पोषणीया इत्युक्ता आपदि शाकपयोदधिपुष्पजलकुशभूमयः कुलटापंढपतितभिन्नात् नीचादप्ययाचितप्राप्ता ग्राह्याः ब्र-
ह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः अध्वगः क्षीणवृत्तिश्च षट् पक्कान्नस्य भिक्षुकाः शूद्रस्य द्विजशुश्रूषा वृत्तिः आपदि कृष्यादिः चतुर्थं
भागं मध्याह्नस्नानं प्रातर्गोमयस्नानं मध्याह्ने मृत्तिकास्नानं अनयोर्विधिः प्रायश्चित्ते उक्तः शेषविधिः प्रातःस्नानवत् ब्रह्मयज्ञांग
तर्पणात् प्राक् वस्त्रं न निष्पीडयेदिति विशेषः ततो धृतपुंड्रो मध्याह्नसंध्यां कुर्यात् अर्घ्यवर्ज्यामादासायंसंध्या माध्याह्निकी प्यते तत्र वि-
शेषः सूर्यश्चेति स्थाने आपः पुनंत्विति मंत्राचमनं आपः पुनंत्वित्यस्य नारायण याज्ञवल्क्य आपः पृथिवी ब्रह्मणस्पतिरष्टी मंत्राच

ध॰सिं॰

भनेशिनियो॰ ॐ आपः पुनंतु पृथिवीं पृथिवी पूता पुनातु मां पुनंतु ब्रह्मणस्पति ब्रह्मपूता पुनातु मां यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम सर्वं पुनं तु॰प॰पृ॰
तु मामापो सतां च प्रतिग्रहं स्वाहेति पिबेत् अघमर्षणांतेतिष्ठन् हंसः शुचिषदित्यस्य गौतमः सूर्यो जगती अर्घ्यदाने वि॰ ॐ हंसः शु॰
॰ एकार्घ्यं अर्घ्यांते उपस्थानं ऊर्ध्वबाहुः उदुत्यमिति त्रयोदशर्चस्य काण्वः प्रस्कण्वः सूर्यो गायत्री अंत्यास्तिस्रोनुष्टुभः सूर्योपस्था
ने वि॰ केचित्तु चित्रं देवानामिति षड्भिरप्युपतिष्ठंते शेषमुपस्थानवर्ज्यं प्रातः संध्यावत् रात्रौ मध्यान्हसंध्यायामाकृष्णेनेत्यर्घ्यदानं
गायत्र्या प्रायश्चित्तार्घ्यं द्वितीयं दत्वा हंसविष्णांतामिति पंचर्चोपस्थानं अथ तैत्तिरीयाणां आपः पुनंत्वित्यपः पीत्वा दधिक्राव्णोति पूर्ववत् *
कृत्वा सूर्यायैकमर्घ्यं गायत्र्या दत्वोर्ध्वबाहुस्तिष्ठन्नुपतिष्ठेत् उद्वयं॰ १ उदुत्यं जातवे॰ १ चित्रं देवानां॰ १ तच्चक्षुर्देवहितं पुरस्तात् १ य उदगा
न्महतो॰ ततो जपादि उपस्थानवर्ज्यं प्राग्वत् अथ कातीयानां आपः पुनंत्विति प्राग्वत् गायत्र्यैकार्घ्यं उद्वयमित्यादि चतुर्भिरुपस्था
नं जपांते शक्तस्य पूर्वोक्तैर्विभ्राडित्यनुवाकादिभिरुपस्थानं शेषं प्राग्वत् अथ ब्रह्मयज्ञः स च प्रातर्होमोत्तरं वा मध्यान्हसंध्योत्तरं
वा वैश्वदेवांते वा भक्तदेवकार्यः भट्टोजिदीक्षितीये तु प्रातराहुतेरनंतरकालः शाखांतरविषयः आश्वलायनैस्तु मध्यान्हसंध्योत्तरमेवा
नुष्ठेय इत्युक्तम् शुष्कवासास्तदभावे आर्द्रं त्रिर्विधून्वन् परिधायाचम्य प्राणानायम्य श्रीपरमेश्वरप्रीत्यर्थं ब्रह्मयज्ञं करिष्ये तदंगत्वेन देव
र्षिस्वाचार्यतर्पणं करिष्ये मृतपितृकैः पितृतर्पणं च करिष्ये इति संकल्प्य दर्भेषु दर्भपाणिः प्राङ्मुख एवोपविश्य वामजंघोपरि मूल ६०

देशादक्षिणपादं निधायाथवावामपादांगुष्ठोपरि दक्षिणपादांगुष्ठं निधायैवोपस्थं कृत्वा दक्षिणजानुस्थेवामे करेउत्ताने प्रागग्रांगुलौप्रा
गग्रे द्वे पवित्रे धृत्वा दक्षिणकरेण तथैव संपुटीकृत्य द्यावापृथिव्योः संधिमीक्षमाणो निमीलिताक्षो वोंकारव्याहृतीः सकृदुच्चार्य गायत्रीं
पच्छोर्धर्चशः सर्वामनवानामिति त्रिर्जपेत् ततोग्निमीळ इति सूक्तं पठित्वा संहिताब्राम्हणषडंगानि एकं समाप्यापरमित्यध्यायं सूक्तमृ
चं वा यथाशक्ति क्रमशः पठेत् मंत्रब्राम्हणादीनि भागशः सर्वाणि यथाशक्ति प्रतिदिनं पठेदिति केचित् एवं यजुर्वेदाध्यायी क्रमशश्च
तुर्वेदान् भागशः सर्वानेव वा ऋग्वेदपूर्वकान् पठेत् एकैकशाखाध्यायी तु स्वशाखामेव शाखाध्ययनाभावे सूक्तमृचं वा पठित्वैकं यजुः
साम चोपनिषद इतिहासपुराणादींश्च पठेत् पुरुषसूक्तमुक्त्वा नमो ब्रम्हणे नमो अस्त्वग्नये इत्यृचं त्रिः पठेत् नात्र ऋष्यादिस्मरणं विद्य
दसीत्यादराद्यंते पाठस्तैत्तिरीयविषयः उपविश्य पाठाशक्तस्तिष्ठन्व्रजन्शयानो वा पठेदित्याश्वलायनः॥ अनध्यायेष्वल्पं पठेत् अथ त
र्पणं तत्र सव्येन देवतीर्थेन दर्भाग्राभ्यां देवतर्पणं तद्यथा साक्षतजलैः प्राच्यपि तृतर्पण॥ प्रजापतिस्तृप्यतु ब्रह्मा तृप्यतु वेदास्तृ०
देवास्तृ० ऋषयः० सर्वाणि छंदांसि० ॐकारः० वषट्कार० व्याहृतयः० सावित्री० यज्ञा० द्यावापृथिवी तृप्येतां॥ अंतरिक्षं० अहोरात्रा
णि तृप्यं० सांख्या० सिद्धा० समुद्रा० नद्य० गिर० क्षेत्रौषधिवनस्पतिगंधर्वाप्सरस० नागा० वयांसि० गावः० साध्या० विप्रा० यक्षा० रक्षां-
सि० भूतानि० एवमंतानि तृ०२९ अथ ऋषयः निवीती कनिष्ठिकामूलेन दर्भमध्याभ्यां शतर्चिनः० माध्यमास्तृ० गृत्सम० विश्वामि०

वामदेवा॰ अत्रि॰ भरद्वा॰ वसिष्ठ॰ प्रगाथा॰ पावमान्य॰ क्षुद्रसू॰ महासूक्ता॰ १२ एकत्वद्वित्वबहुत्वेषु तृप्यतु तृप्यंतां तृप्यंत्विति यथाप-
थंवदेत् अथप्राचीनावीती पितृतीर्थेनद्विगुणीकृतदर्भमूलाग्रैः सुमंतुजैमिनिवैशंपायनपैलसूत्रभाष्यभारतमहाभारतधर्माचा
र्यास्तृप्यंतु जानंतिबाहविगार्ग्यगौतमशाकल्यबाभ्रव्यमांडव्यमांडूकेयास्तृ॰ गार्गीवाचक्नवीतृ॰ वडवाप्रातेथेयीसुलभामैत्रेयी॰ क-
होळंतर॰ कौषीतकंत॰ महाकौषीतकं॰ पैग्यंत॰ महापैग्यंत॰ सुयज्ञंत॰ सांख्यायनंत॰ ऐतरेयंत॰ महैतरेयं॰ शाकलंत॰ बाष्कलंत॰ सुजा
तवक्त्रं॰ औदवाहिं॰ महौदवाहिं॰ सौजामिं॰ शौनकंत॰ आश्वलायनंत॰ येचान्ये आचार्यास्तेसर्वेतृप्यंतु २३ ततोमृतपितृकः पितृत्र
यीमातृत्रयींसपत्नीकमातामहत्रयींपत्न्याद्येकोद्दिष्टगणांश्चमहालयप्रकरणोक्तान्मृतांस्तर्पयेत् संबंधंप्रथमंब्रूयान्नामगोत्रम
नंतरं पश्चाद्रूपंविजानीयात्क्रमएषःसनातनः एकैकमंजलिंदेवाद्वौद्वौऋषिभ्यस्त्रींस्त्रीन्पितृभ्यइतिसंख्याविशेषः आश्व
लायनानांवैकल्पिकः तत्सूत्रेसंख्यानुक्तेः येषांसूत्रेसंख्योक्तिस्तेषांनित्यइतिमाधवः मातृत्रयीभिन्नस्त्रीभ्यएकांजलिः एता
वद्भिस्तर्पणाशक्तो आब्रह्मस्तंबपर्यंतंदेवर्षिपितृमानवाः तृप्यंतुपितरःसर्वेमातृमातामहादयः अतीतकुलकोटीनांसप्तद्वीप
निवासिनां आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकमितित्रिस्त्रिर्दद्यात् ततोयेकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः तेगृह्णंतुम
यादत्तंवस्त्रनिष्पीडनोदकमितिपरिधानवस्त्रंभूमौनिष्पीड्यदद्यात् अत्रबह्वृचानांप्राचीनावीती अन्येषांनिवीती इदंगृहेनिषिद्धं

ब्रह्मयज्ञो ग्रामाद्बहिरुदकसमीपे विहितः ग्रामे मनसाधीयीत सव्यान्वारब्धदक्षिणेनांजलिनावा तर्पणं तर्पणं बर्हिषाछन्नेस्थले
कार्यंनतुजलेपात्राद्वाजलमादाय शुभेपात्रांतरक्षिपेत् जलपूर्णेथवागर्तेनस्थलेतुविबर्हिषी हेमरौप्यताम्रकांस्यमयेपात्रेनमृन्म
येयत्रास्युःकुशाः स्थलंतत्रतर्पणंस्यान्नदीजले अनामिकाधृतंहेमतर्जन्यांरौप्यमेवच कनिष्ठिकाधृतंखड्गं तेनपूतोभवेन्नरः अंगुल्य
ग्रेतीर्थंदैवंस्वल्पांगुल्योर्मूलेकायं मध्येंगुष्ठांगुल्योः पित्र्यंमूलेत्वंगुष्ठस्यब्राह्मं उद्धृतजलेनपितृतर्पणेतिलान्संमिश्रयेज्जलेअनु-
द्धृतजलेनतर्पणेवामहस्ते तिलाग्राह्याः तिलतर्पणंगृहेनिषिद्धं रविभृगुवारेसप्तमीनंदासुकृत्तिकामघाभरणीषुमन्वादौ युगादौ
चपिंडदानंमृदास्नानंनकुर्यात्तिलतर्पणंपित्रोःश्राद्धदिनेनित्यतर्पणेतिलानिषिद्धाः पर्वादिनेनिषिद्धतिथिवारादिष्वपितिलतर्पणं
विकिरेपिंडदानेचतर्पणेस्नानकर्मणि आचांतःसन्प्रकुर्वीतदर्भसंत्यजनंबुधः दर्भत्यागमंत्रस्तु येषांपितानचभ्रातानपुत्रोनान्य-
गोत्रिणः तेसर्वेतृप्तिमायांतुमयोत्सृष्टैःकुशैस्तथेति अथहिरण्यकेशीयानांसंकल्पादित्रिगायत्रीजपांतंप्राग्वत् ततइषेत्वो
र्जेत्वेत्यस्यायमनुवाकंवायथाशक्तिपठित्वाऋक्सामषडंगेतिहासपुराणादीनिपठित्वानमोब्रह्मणइत्येतयात्रिःपरिदधाति अथतर्पणं
तच्चतैत्तिरीयाणांब्रह्मयज्ञांगंनभवति तेनब्रह्मयज्ञोत्तरंव्यवहितकालेपिब्रह्मयज्ञात्प्रागपिभवति एवंकाण्वमाध्यंदिनानामपिब्र
तोदेवर्ष्याचार्यपितृतृप्तिद्वाराश्रीपरमेश्वर० देवर्ष्याचार्यपितृतर्पणंकरिष्ये इतिपृथगेवसंकल्पः पूर्ववदेकैकांजलिनादेवतर्पणं

ब्रह्माणंतर्पयामि॰ प्रजापतिंतर्प॰ बृहस्पतिंत॰ अग्निंत॰ वायुंत॰ सूर्यंत॰ चंद्रमसं॰ नक्षत्राणि॰ इंद्रं २ राजानंत॰ वरुणं २ राजानं॰
सोमं २ राजानं॰ वैश्रवणं २ राजानं॰ वसून्॰ रुद्रान्॰ आदित्यान्॰ विश्वान्देवान्॰ साध्यान्॰ ऋभून्॰ भृगून्॰ मरुतः॰ अथर्वणः॰ अं-
गिरसस्तर्पयामीति निवीती उदङ्मुखः विश्वामित्रं॰ जमदग्निं॰ भरद्वाजं॰ गौतमं॰ अत्रिं॰ वसिष्ठं॰ कश्यपं॰ अरुंधतीं॰ अगस्त्यं॰
कृष्णद्वैपायनं॰ जातूकर्ण्यं॰ तरुक्षं॰ तृणबिंदुं॰ वर्मिणं॰ वरूथिनं॰ वाजिनं॰ वाजश्रवसं॰ सत्यश्रवसं॰ सुश्रवसं॰ सुतश्रवसं॰ सोमशुष्माय-
णं॰ सत्ववंतं॰ बृहदुक्थ्यं॰ वामदेवं॰ वाजिरत्नं॰ हर्यज्वायनं॰ उदमयं॰ गौतमं॰ ऋणंजयं॰ कृतंजयं॰ तक्रतुंजयं॰ धनंजयं॰ बभ्रुं॰ त्र्यरु-
णं॰ त्रिवर्षं॰ त्रिधातुं॰ शिबिंत॰ पराशरं॰ विष्णुं॰ रुद्रं॰ स्कंदं॰ काशीश्वरं॰ ज्वरं॰ धर्मं॰ अर्थं॰ कामं॰ क्रोधं॰ वसिष्ठं॰ इंद्रं॰ त्वष्टारं-
त॰ कर्तारं॰ धर्तारं॰ धातारं॰ मृत्युं॰ सविशारं॰ सावित्रीं॰ ऋग्वेदं॰ यजुर्वेदं॰ सामवेदं॰ अथर्ववेदं॰ इतिहासंपुराणं॰ इतिहोद्वा-
वंजली प्राचीनावीती दक्षिणामुखः वैशंपायनं॰ पलिंगुंतर्प॰ तित्तिरिंत॰ उखंत॰ आत्रेयंपदकारं॰ कौंडिण्यंवृत्तिकारं॰ सूत्रकाराव्
सत्याषाढं॰ प्रवचनकर्तॄन् आचार्यान्॰ ऋषीन्॰ वानप्रस्थान्॰ ऊर्ध्वरेतसः॰ एकपत्नीस्तर्पयामीति त्रींस्त्रीनंजलीनिति वि-
शेषः शेषंपितृतर्पणादिसर्वंप्रागुक्तमेव अथपंस्तंबादीनां ब्रह्मादयोयेदेवास्तां॰ सर्वान्देवान्॰ सर्वान्देवगणान्॰ सर्वादेवपत्नीः॰
सर्वानपुत्रांकसर्वान्पौत्रान्॰ भूर्देवां॰ भुवर्देवां॰ स्वर्देवां॰ भूर्भुवस्स्वर्देवां॰ कृष्णद्वैपायनादयोयेऋषयः तानृषीं॰ सर्वानृषीं॰ सर्वानृ-

गणान्॰ सर्वानृषिपत्नीः॰ सर्वानृषिपुत्रान्॰ सर्वानृषिपौत्रान्॰ ६ भूऋषीं॰ ४१॰ एवं सोमः पितृमान्यमोंगिरस्वानान्॰ तान्पितॄनि-
त्यादयो दशपितृपर्याया ऊह्याः एवमन्येषामप्यूह्यं अथ कात्यायनानां प्राङ्मुख आचम्य पवित्रे धृत्वा प्राणानायम्य श्रीपर॰ थं ब्र-
ह्मयज्ञं सव्ये दर्भान् जले धृत्वा दक्षिणजानौ धृत्वा सूत्रांत सकृद्गायत्रीं त्रिरुच्चार्य इषेत्वेत्यादि आरभ्य संहितां ब्राह्मणं च पूर्वोक्तरीत्या प-
ठेत् अनंतरं पौनर्वादितिहासपुराणादि पठित्वा अंते ॐ स्वस्तीति वदेत् सूत्रांतरोक्तत्वात् नमो ब्रह्मण इति त्रिः पठंति केचित् अथ तर्पणं
एतच्च प्रातः संध्यानंतरं वा मध्याह्ने ब्रह्मयज्ञांतरं वा सकृद्देवकार्यं ब्रह्मयज्ञस्यैव कल्पिककालत्रयमुक्तम् तत्र देवर्षिपितृतर्पणं करिष्ये
इति संकल्प्यादौ पूर्वोक्तधर्मेण देवतर्पणं भूमौ ताम्रादिपात्रे वा दर्भानास्तीर्य विश्वेदेवास आगतेति देवानावाह्य विश्वेदेवाः शृणुतेमं भाति
तर्पितान्मंत्रान्प्रागग्रान्दर्भान् धृत्वा देवतीर्थेन ॐ ब्रह्मा तृप्यतां विष्णुः॰ रुद्रः॰ प्रजापतिः॰ देवास्तृ॰ छंदांसि॰ वेदाः॰ ऋषयः पुराणाचार्याः॰ गं-
धर्वाः॰ इतराचार्याः॰ संवत्सरः॰ सावयः॰ देव्यस्तृप्यंतां अप्सरसः॰ देवानुगाः॰ नागाः॰ सागराः॰ पर्वताः॰ सरितः॰ मनुष्याः॰ यक्षाः॰ रक्षांसि॰ पि-
शाचाः॰ सुपर्णाः॰ भूतानि॰ पशवः॰ वनस्पतयः॰ ओषधयः॰ भूतग्रामश्चतुर्विधस्तृप्यतामिति सर्वत्र सप्रणवं प्रथमांतं नामोच्चार्य तर्पयेत्॰
सप्तऋषय इति मंत्रेण ऋषीनावाह्य निवीती द्विर्द्विः सनकस्तृप्यतु सनंदनः॰ सनातनः॰ कपिलः॰ आसुरिः॰ वोढुस्तृ॰ पंचशिखः॰ अपसव्यं उशंत-
स्त्वेति पितॄनावाह्यायंतु नः पितर इति जपित्वा पितृतीर्थेन त्रिस्त्रिः कव्यवाडनलस्तृप्यतां सोमः॰ यमः॰ अर्यमा॰ अग्निष्वात्ताः पितरस्तृप्यंतां

सोमपापितरः॰ बर्हिषदः॰ यमाय नमः तर्पयामि धर्मराजाय॰ मृत्यवे॰ अंतकाय॰ वैवस्वताय॰ कालाय॰ सर्वभूतक्षयाय॰ औदुंबराय॰ दध्ना
य॰ नीलाय॰ परमेष्ठिने॰ वृकोदराय॰ चित्राय॰ चित्रगुप्ताय॰ ९१ यमतर्पणं वैकल्पिकं सूत्रे एकैकस्य त्रीन् जीवत्पितृकस्य प्रणिबंधपर्यंतमपस
व्यमवंत्र ततो मृतपितृकः। पित्रादित्रयं मात्रादित्रयं च तर्पयित्वा उदीरतामिति त्रिभिर्ऋग्भिस्तर्पणं जलस्यानं अंजलिना धारां निषिं-
चेत् उदीरतां अंगिरसोनः पितरो॰ आयंतुनः॰ ऊर्जंवहंतीरमृतं॰ पितृभ्यः स्वधायिभ्यः॰ येचेह॰ मधुवाताइतितिस्रइति॰ ९ प्रत्यृचं मंत्रोक्तं कु
र्यात् तृप्यध्वमिति त्रिः सिंचेत् ततो नमो वः पितर इत्यष्टाय जुंष्टिपर्यं पठित्वा मातामहादीनेकोद्दिष्टगणांश्च तर्पयेत् देवागातुविद इति विसर्ज
येत् स्नानवस्त्रनिष्पीडनोदकदानादि प्राग्वत् प्रातर्होमानंतरं देवतार्चनं नकृतं चेच्चतुर्थभागे ब्रह्मयज्ञोत्तरं कार्यं १ अथ पंचम भागकृत्यं ॥
वैश्वदेवः प्रकर्तव्यः पंचसूनापनुत्तये कंडणी पेषणी चुल्ली जलकुंभो थमार्जनी इति पंचहिंसास्थानानि पंचसूनाः वैश्वदेवस्य प्रातरेव प्रारंभो
नत्वग्निहोत्रादिवत्सायं तेन प्रातः सायं वैश्वदेवं त्यादिरेव संकल्पः पंचमहायज्ञा अहरहः कर्तव्याः ते च ब्रह्मयज्ञ देवयज्ञ भूतयज्ञ पितृ
यज्ञ मनुष्ययज्ञाख्याः तत्र ब्रह्मयज्ञ उक्तः बलिहरणादीनां वैश्वदेवो देवयज्ञादि यज्ञत्रयरूपः मनुष्ययज्ञस्तु मनुष्येभ्योन्नदानं गृहपक्वह-
विष्यान्नैस्तैलक्षारादिवर्जितैः जुहुयात्सर्पिषाभ्यक्तैर्गृह्येग्नौ लौकिकेपि वा यस्मिन्नग्नौ पचेदन्नं तस्मिन्होमो विधीयते वैश्वदेवांतर्गतपि-
तृयज्ञेनैव नित्यश्राद्धसिद्धेर्न नित्यश्राद्धार्थं पृथक्पाकः अनेनैव दर्शश्राद्धस्यापि सिद्ध्या दर्शश्राद्धमप्यशक्तेः संवत्सरमध्ये सकृद्देवकार्यं

मितिभट्टोजीये सूतकेपंचमहायज्ञानांलोपइत्युक्तं सचायंवैश्वदेव आत्मसंस्कारार्थोन्नसंस्कारार्थश्चतेनाभक्तानांपाकैक्येपृथक्वै-
श्वदेवोनविभक्तानांतुपाकैक्यपिहविष्यांतरेणपृथगेव 'अविभक्तानांपाकभेदेपृथक्वैश्वदेवः कृताकृतइतिभट्टोजीयेपाकासंभवेएका-
दश्यादौतंडुलैर्वापयोदधिघृतफलोदकादिभिर्वाकार्यः हस्तेनान्नादिभिः कुर्यादद्भिरंजलिनाजले कोद्रवंचणकंमाषंमसूरंचकुलित्थ-
कं क्षारंचलवणंसर्वंवैश्वदेवेविवर्जयेत प्रवसतागृहेपुत्रर्त्विगादिद्वारावैश्वदेवः कारयितव्यः गृहेकर्त्रंतराभावेप्रवासेस्वयंकार्यः वैश्वदे-
वोबह्वृचैस्तैत्तिरीयैश्चदिवारात्रौचेतिद्विवारंकार्यः 'अथवैकस्मिन्नेककालेवाद्विरावृत्त्यासहवाकार्यः बह्वृचतैत्तिरीययोर्लौकिकाग्नौपा-
कोवैश्वदेवश्चेतिप्रायेणाचारः॥ अथप्रातःसायंवैश्वदेवस्यसहकरणपक्षेतंत्रप्रयोगः तत्रवैष्णवैर्भगवतेषोडशापंचवादीपांतानुपचा-
रान्समर्प्यसर्वान्नात्पुरुषाहारपर्याप्तंनैवेद्यंसमर्प्यशेषान्नेनवैश्वदेवः कार्यः वैष्णवभिन्नैस्तुवैश्वदेवांतेतच्छेषेणनैवेद्यः कार्यः विष्णो-
र्निवेदितान्नेनयष्टव्यंदेवतांतरंपितृभ्यश्चापितद्देयंतदानंत्यायकल्पतेइत्यादिवचनानांवैष्णवविषयकत्वस्यनिबंधकारैरुक्तत्वात् अत्र
वैष्णवानारायणाष्टाक्षरादिवैष्णवमंत्रदीक्षोपदेशजपवंतोमुख्याः उपदेशः कलौयुगइतिस्मृत्योपदेशमात्रस्यापिदीक्षासमफलत्वा-
त्॥ गौणाश्चपारंपर्यागतारुणोदयविद्धैकादश्यनुपवासशुक्लकृष्णैकादश्युपवासादियत्किंचिद्धर्ममात्रपरामंत्रोपदेशादिरहिताः ननुपंच-
रात्रागमोक्तदीक्षांप्राप्तोहिवैष्णवइत्युक्तेः किंचिद्धर्ममात्रानुष्ठानेनकथंवैष्णवत्वमितिचेत् गायत्र्यध्ययनादिक्षत्रियवैश्यसाधारण्य

धर्मवतां यजनाध्यापनप्रतिग्रहरूपासाधारणधर्मशून्यानां पित्रादिपरंपरया वैश्यादिवृत्तिपराणामप्यव्यभिचरितैकगोत्रत्वात्क्षत्रियत्वसि
द्धिब्राह्मणधर्ममात्रेण पयास्यासगापर्शा गा गयथा ब्राम्हणत्वं तदुचितसूतकाद्याचारश्च तथा कलियुगे किंचिद्धर्मेणापि वैष्णवत्वं
तदुचिताचारश्च युज्यते क्षत्रियाणां हि पुरोहितभेदेन गोत्रभेदस्तेन यदुवंशेषु परस्परं विवाहो नैवं ब्राम्हणेष्विति स्पष्टं एवंश्चाद्धे
पिनैवेद्यं समर्प्य पितृभ्योन्ननिवेदनं ज्ञेयं ममात्मान्नसंस्कारपंचसूनाजनितदोषपरिहारद्वारा श्रीप॰ प्रातर्वैश्वदेवं सायंवैश्व
देवं च सहतंत्रेण करिष्ये कुंडे स्थंडिलादौ वा पचनाग्निं व्याहृतिभिः पावकनामानं प्रतिष्ठाप्य चत्वारि शृंगेति ध्यात्वा परिसमूह्य पर्यु
क्ष्य विश्वानिनइत्यर्चनादि विधाय घृताक्तमन्नमग्नावधिश्रित्य प्रोक्ष्योद्वास्याग्नेः पश्चान्निधाय त्रिविधा विभज्य प्रथमं भागं देवेभ्यो
जुहुयात् तद्यथा हृदि सव्यं करं निधायोत्तानहस्तेन सूर्याय स्वाहा सूर्यायेदं नमम प्रजापतये॰ सोमाय वनस्पतये॰ अग्नीषोमा
भ्यां॰ इंद्राग्निभ्यां॰ द्यावापृथिवीभ्यां॰ धन्वंतरये॰ इंद्राय॰ विश्वेभ्यो देवेभ्यो॰ ब्रह्मणे॰ इति दश प्रातर्वैश्वदेवाहुतयः अथ सायंवैश्व
देवीयाः अग्नये स्वाहेति हुत्वा प्रजापतय इत्यादि पुनर्नवजुहुयात् एवं विंशत्याहुती हुत्वा प्रायश्चित्तार्थं व्यस्तसमस्तव्याहृतिभिर्हुत्वा
न हुत्वा वा परिसमूहनपर्युक्षणे कुर्यात् ॐ च म इत्युपतिष्ठेत् इति देवयज्ञः अथ बलिहरणाख्यो भूतयज्ञः द्वितीयभागाद्गृहीत्वाग्नेः
द्वायां भूमौ सूर्याय स्वाहा सूर्यायेदं न ममेत्येवं दशाहुतीः प्राक्संस्था निरंतरा हुत्वा मध्ये तरालं त्यक्त्वा अद्भ्यः स्वाहा ओषधिवनस्पतिभ्यः॰

गृह्ा० गृहदेवताभ्यः० वास्तुदेव० इतिप्राक्संस्थाहुत्वा अग्न्न आहुतेः पश्चात् इंद्राय० यदुत्तरे इंद्रपुरुषेभ्यः अंतरालस्यदक्षिणेयमा
य० तदुत्तरेयमपुरुषेभ्यः० ब्रम्हण आहुतेः प्राक् वरुणाय तदुत्तरेवरुणपुरुषेभ्यः० अंतरालस्योत्तरेसोमाय तदुत्तरेसोमपुरुषेभ्य
अंतरालेब्रम्हाणब्रह्मपुरुषेभ्यः० विश्वेभ्योदेवेभ्यः० सर्वेभ्योभूतेभ्यः० दिवाचारिभ्यः० सोमपुरुषोत्तरेरक्षोभ्यः० एवमेवसायंवैश्वदेव
संबंधिद्वितीयबलिहरणंकुर्यात् तत्रसूर्यस्यानेप्र यममग्नयेहुत्वाप्रजापतयइत्यादिपूर्ववत् दिवाचारिभ्यइत्यस्यस्थानेनक्तंचारि
भ्यःस्वाहेतिजुहुयात्इतिविशेषः इतिभूतयज्ञः प्राचीनावीती तृतीयभागादादायस्वधापितृभ्यः इतियमबलेर्दक्षिणतोदत्वापि
तृभ्यइदंनममेत्युक्त्वाद्वितीयबलेर्दक्षिणतःद्वितीयंपितृयज्ञमेवकुर्यात् इतिपितृयज्ञः अपरेचक्राकारंबलिमाहुः बलावनुद्ध
तेनाद्यान्नोद्धरेत्स्वयंबलिं ततोगृहांगणेभूमावप आसिच्य ऐंद्रवारुणवायव्यायाम्यानैर्ऋतिकाश्चये तेकाकाः प्रतिगृण्हंतुभूम्यांपिं
डंमयोज्झितं इतिपितृयज्ञशेषेणदद्यात् वैवस्वतकुलेजातौद्वौश्यामशबलौशुनौ ताभ्यांपिंडोमयादत्तोरक्षेतांपथिमांसदा येभू
ताप्रचरंति० इतिद्वयंभूतयज्ञशेषेणदद्यात् येभूताइतिमंत्रतंत्रेणवैश्वदेवप्रयोगेदिवानक्तंबलिमितिपाठः॥ ॥अग्निहोत्रेचपृ
थक् प्रयोगेदिवाबलिमिच्छंतोनक्तंबलिमिच्छंत इतिविभागेनपाठः प्रक्षालितपाणिपाद आचम्य गृहंप्रविश्य शांतापृथिवीत्यादि
जपित्वाविष्णुंस्मृत्वाकर्मापर्यंत अथमनुष्ययज्ञः अतिथिभोजनपर्याप्तं षोडशग्रासमिदं वाग्रासचतुष्टयंवाग्रासमितंवान्नंसनका

दि मनुष्येभ्यो हंतेदंनममेति दद्यात् बहुभुक्तिस्कके वागतेषशक्तेनत्रिभ्योग्रासत्रयंदेयं अथतैत्तिरीयाणां श्राद्धदिनेभिन्नपाकेनादौवै-
श्वदेवोदेवयज्ञादिचतुष्टयंचभवति अपरे आदौवैश्वदेवांते पंचमहायज्ञाइत्याहुः याजुषाः सामगाः पूर्वंमध्येकुर्वंत्यथर्वणाः बव्ह
चाश्चश्राद्धशेषेणतत्राप्यादौतु साग्निकाः स्वर्गपुस्त्यर्थमात्मसंस्कारार्थं मातःसायंवैश्वदेवौतंत्रेणकरिष्ये औपासनाग्निंपच्चनाग्निवाप्र
लिधाप्यतमौपासनहोमवत्परिसमुह्यपरिषिच्यान्नमग्नावधिश्रित्यमोद्स्योद्वास्याभिघार्याग्निंसंपूज्याऽन्नंत्रेधाविभज्यहस्तेनजु-
हुयात् अग्नयेस्वाहा॥ विश्वेभ्योदेवेभ्यः० ध्रुवायभूमाय० ध्रुवक्षितये० अच्युतक्षितये० अग्नयेस्विष्टकृते० परिसमुह्यपर्युक्ष्याग्नेः
पश्चादेकत्रैवदेशेन्यजलाकारश्चक्राकारोवाबलिः तत्रदेवताः धर्मायस्वाहा धर्मायेदं० अधर्माय० अद्भ्यः० ओषधिवनस्पतिभ्यः० र-
क्षोदेवजनेभ्यः० गृह्याभ्यः० अवसानेभ्य० अवसानपतिभ्य० सर्वभूतेभ्य० कामाय० अंतरिक्षाय० यदेजातिजगतियच्चचेष्टतिनाम्नोभागो
यन्नाम्नेस्वाहा॥ तन्नाम्नइदं० केचित्द्वयवइदमितित्यागमाहुः पृथिव्यैस्वाहा अंतरिक्षाय० दिवे० सूर्याय० चंद्रमसे० नक्षत्रेभ्य० इंद्राय०
बृहस्पतये० प्रजापतये० ब्रम्हणे० सर्वान्सकृत्परिषिच्य पृथक्पृथक्परिषेचनपक्षेद्वावेकंद्वेचत्वारिप्रत्येकंत्रीणिचैवाहि पृथिव्यादिद-
शस्वेकमतऊर्ध्वंपृथक्क्रमात्इतिज्ञेयं प्राचीनावीतीतद्दक्षिणतः स्वधापितृभ्यः स्वाहा तदुत्तरतउपवीती नमोरुद्रायपशुपतये
स्वाहा पितृरुद्रबलीपृथक्परिषिंचेत इतिवैश्वदेवः अथदेवयज्ञादिचतुष्टयंदेवयज्ञेतपक्ष्येइतिसंकल्प्याग्निपरिषिच्यदेवेभ्यःस्वाहे

स्यग्नौहुतोतरपरिषेकः प्राचीनावीतीपितृयज्ञेनयक्ष्ये दक्षिणतोभूमौपितृभ्यः स्वधास्त्विति दत्वात्यक्त्वापरिषिच्य यज्ञोपवीती
अपः स्पृष्ट्वा भूतयज्ञेनयक्ष्ये भूतेभ्योनमइतिभूमौदत्वापरिषिच्यनिवीती मनुष्ययज्ञेनयक्ष्ये उद्धृतमाणमन्नं मनुष्येभ्योहंतेतिदद्या-
त् सर्वयज्ञेष्वाद्यंतयोः क्रमेणाविद्धदसिदृढिरसीतिमंत्रयोः पाठः प्रायेणैषां बलिशिष्टमन्नंयेभूताः प्रचरंतीतिगृहांगणेगत्वाकाशेउ
त्क्षिपेत् ततोयथाचारंश्ववायसादिबलिः अथकातीयानां तत्रसाग्निकानामेकपाकेश्राद्धदिने आदौवैश्वदेवः अन्येषामंते प्रा
वसथ्योल्मुकंमहानसेकृत्वा तत्रपाकंविधायमहानसस्थांगारान्गृहीत्वाग्नौनिधायपाकादन्नं घृताक्तमादायपूर्ववदात्म०र्थेवैश्वदेवा
ख्यंकर्मकरिष्ये इतिसंकल्प्य अथवादेवभूतपितृमनुष्यान्वैश्वदेवान्नेनयक्ष्ये गृह्याग्निंमणिकोदकेन पर्युक्ष्यहस्तेनाग्नौजुहुयात् ब्र-
ह्मणेस्वाहा इदंब्रह्मणेनमम एवमग्रेपि प्रजापतये० गृह्याभ्यः० कश्यपाय० अनुमतये० इतिदेवयज्ञः ततोमणिकसमीपेबलित्र
यमुदक्संस्थं पर्जन्याय नमः स्वाहा इदंपर्जन्यायनमम अद्भ्योनमः० पृथिव्यै० अथद्वारशाखयोः प्राक्संस्थंबलिद्वयं धात्रे० विधा०
उदकेनचतुरस्रंकृत्वा तत्रपूर्वेवायवे० दक्षिणेवायवे० पश्चिमेवायवे० उत्तरेवायवे० प्रागादिषुवायुबलेः प्रागग्रदर्भेवा प्राच्यैदिशे० दक्षिण
स्यैदि० प्रतीच्यैदिशे० उदीच्यै० मध्ये प्राक्संस्थं ब्रह्मणे० अंतरिक्षायसूर्याय० एषामुत्तरेविश्वेभ्योदेवेभ्यो० विश्वेभ्योभूतेभ्यो० अनयो
रुत्तरे० उषसे० भूतानांपतये० इतिभूतयज्ञः प्राचीनावीती ब्रह्मादिबलित्रयस्यदक्षिणे पितृतीर्थेन पितृभ्यः स्वधानमइदंपितृभ्योन-

ममेतिदद्यात् इतिपितृयज्ञः पात्रंप्रक्षाल्यसव्येनब्रम्हादिबलितोवायव्यांयस्मैतत्तेनिर्णेजनमितितज्जलंनिनयेत् पूर्ववन्मनुष्य
यज्ञः निरग्निकस्तुलौकिकाग्निमात्रस्यपृष्ठोदिवीतिप्रतिष्ठाप्य तत्सवितु० ता २ सवितु० विश्वानिदेव० इतितिसृभिः सावित्रैः प्रज्वाल्य तत्र
नित्योपासनहोमंकृत्वापाकंपंचहंस्वदेवंचकुर्यादितिगदाधरः तत्राप्यशक्तौबव्हृचानामुक्तरीत्यापचनाग्निंप्रतिष्ठाप्य ध्यात्वासंपू-
ज्यतत्रपूर्वोक्तरीत्यावैश्वदेवस्तत्र अग्नयेस्विष्टकृतेस्वाहेतिपंचाहुतिनामुत्तरहोमः सर्वत्रनिरग्नेरितिविशेषः शेषंप्राग्वत् कात्यायनानां
दिवैकोवैश्वदेवोनद्वितीयोरात्रौ सामगाथर्वणैरपिस्वगृह्योक्तरीत्यापंचमहायज्ञाः कार्याः स्वगृह्यानुपलंभेबव्हृचोक्तरीत्योपनयना
दिसंस्काराः पंचमहायज्ञादयश्चकार्याः शाखांतरमतसम्यगनालोच्यस्वधाष्टर्यतः शाखांतराह्निकंप्रोक्तंज्ञात्वाशोध्यंस्वशा
खिभिः इक्ष्वनपः फलंमूलंतांबूलंपयऔषधं भक्षयित्वापिकर्तव्याः स्नानदानादिकाः क्रियाः पंचमहायज्ञेष्वन्यतमस्यलोपेउ
पवासः धनिकस्यातुरस्यचप्रतियज्ञंकृच्छ्रार्धं अन्येत्वेकाहलोपेमनस्वत्याहुतिर्द्व्यहलोपेत्रिभिस्तंतुमतीभिर्होमोवारुणीनांच
तसृणांजपोद्वादशाहंलोपेतंतुमतीस्थालीपाकोवारुणीभिराज्यहोमश्चेत्याहुः अथसर्वसाधारणोभोजनादिविधिः हैमेरज
तपात्रेऽब्जादिपात्रेवाभोजनंशस्तं एकएवतुभुंजीतकांस्यपात्रेनान्योच्छिष्टे तांबूलाभ्यंजनंचैवकांस्यपात्रेचभोजनं यति-
श्चब्रम्हचारीचविधवाचविवर्जयेत् पलाशपर्णेषुयत्यादेः प्रशस्तंगृहिणस्तुचांद्रायणं इदंवल्लीपलाशविषयमितिस्मृत्यर्थसारे

कदलीकुटजमधुजंबूपनसाम्रचंपकोदुंबरपत्राणिशस्तानि अर्काश्वत्थवटादिपत्राणिनिषिद्धानि चतुरस्रमंडले प्रक्षालितपात्रंनिधाय पंचयज्ञावशिष्टघृतादियुक्तं परिशिष्टमन्नमस्माकंनित्यमस्त्वेतदितिवदन्नत्वाग्रंथिरहितपवित्रयुक्तदक्षिणपाणिः पादाभ्यांपादेनवाभूवं स्पृशन् व्याहृतिभिर्गायत्र्याचाभिमंत्र्यसत्यंत्वर्तेनपरिषिंचामीतिदिवा ऋतंत्वासत्येनपरिषिंचामीतिरात्रौपरिषेचनंकृत्वा अंतश्चर-सिभूतेषुगुहायांविश्वतोमुखः त्वंयज्ञस्त्वंवषट्कारस्त्वंविष्णुः पुरुषः परः पात्राद्दक्षिणेभूमौभूपतयेनमः भुवनपतयेन० भूतानांपतये० इतित्रीन्बलीन्दद्यात् यमायचित्रायचित्रगुप्ताययमायधर्मायसर्वभूतेभ्यइतिवाव्यस्तसमस्तव्याहृतिभिर्वाचत्वारः धर्मराजायचित्रगुप्तायेतिद्वौवाभूपत्यादित्रयकृतावेतावितिपंचवादेयाः हस्तपादमुखार्द्रः आपोशनार्थंजलमादायान्नंब्रह्मरसोविष्णुः० अहंवैश्वानरो भूत्वेत्यर्थंध्यात्वा वामकरेणपात्रंधृत्वामृतोपस्तरणमसीत्यपः प्राश्य मौनी ॐ प्राणायस्वाहा ॐ अपानायस्वाहा ॐ व्यानायस्वा० ॐ उदानायस्वा० ॐ समानाय० इतिसघृताः सक्षीरावापंचाहुतीः सर्वांगुलिभिः सर्वग्रासंग्रसन्मुखेजुहुयात् ब्रह्मणेस्वाहेतिषष्ठींकनिवमाणाहुतिपर्यंतंपात्रालंभोमौनंचनियतमग्र्यऐच्छिकद्वयं भोजनंप्राङ्मुखंप्रत्यङ्मुखंवाशस्तंदक्षिणामुखंयशःफलकाम्यंउदङ्मुखं मध्यमंविदिक्ष्निषिद्धं कृत्स्नंग्रासंग्रसन्द्वात्रिंशदादिनियतग्रासमनियतग्रासंवाभुक्त्वामृतापिधानमसीतिगंडूषार्धंपीत्वार्धंभूमौनिनीयपवित्रंत्यक्त्वामुखहस्तोच्छिष्टंसम्यक्प्रक्षालयेत् तर्जन्यामुखंनशोधयेत् किंचिद्गंडूषोत्तरं हस्तप्रक्षालनंषोडशगंडूषांतेद्विराचामेत्

भोजनगृहंचनाचामेत् अनाचांतोमूत्रपुरीषौनकुर्यात् उत्तरापोशनमकृत्वोत्थानेस्नानाच्छुद्धिः हस्तौसंमृज्यप्रस्नाव्यांगुष्ठेननेत्रयोर्निषि
च्येष्टदेवतांस्मरेत् नांजलिनापिबेत् पालाशंदग्धमयोबद्धंचपीठंनवर्जयेत् नशिशुभिःसहभुंजीत भार्ययासहविवाहंवर्जनभुंजीत बाल
वृद्धेभ्योन्नमदत्वानभुंजीत नप्रौढपादोनासनारूढपादोनप्रसारितपादोनविदिक्कुतुंडोनदुष्टैकपंक्तौनशून्याग्निपाकगृहेनदेवालयेभुं
जीत नसंध्ययोर्नमहानिशायांनयज्ञोपवीतहीनोनवामहस्तेननशूद्रशेषंभुंजीत आदौमधुरंमध्येलवणाम्लंमंतेतिक्तादिपूर्वंद्रवंमध्ये
कठिनमंतेद्रवं अथापोशनं यतेः षोडशवनस्थस्यषोडशद्वात्रिंशद्ग्रासागृहिणोयथेष्टंब्रह्मचारिणः सर्वंसशेषमश्नीयान्निःशेषंघृतपायसंक्षीरंद-
धिमधुभुंजीत दिवारात्रौचेतिद्विवारमेवनांतराभोजनं अर्कपर्वद्वयरात्रौचतुर्दश्यष्टम्योर्दिवा एकादश्यामहोरात्रंभुक्त्वाचांद्रायणंचरेत्
यस्तुपाणितलेभुंक्तेयश्चफूत्कारसंयुतं प्रसृतांगुलिभिर्यश्चतस्यगोमांसवच्चतत् नाजीर्णेभोजनंकुर्यात्कुर्यान्नातिबुभुक्षितः नार्द्रवासाना
र्द्रशिरानपादारोपितेकरे ग्रासशेषंनचाश्नीयात्पीतशेषंपिबेन्नच शाकमूलफलादीनिदंतच्छेदैर्नभक्षयेत् नोच्छिष्टोघृतमादद्यान्नपदाभा
जनंस्पृशेत् पिबतोयस्यतत्तोयंभाजनेमुखनिःसृतं अभोज्यंतत् पीतावशिष्टतोयपानेचांद्रायणं हस्तनखस्पृष्टजलपानेवामहस्तोद्धृ
तजलपानेचसुरापानसमं एकपंक्त्युपविष्टानांविप्राणांभुंजानानामेकस्मिन्नप्युत्थिते आचांतेवान्यैर्नभोज्यं अत्रोत्थितस्यभोक्तुश्चदोषः
गुरोर्नदोषः लवणंव्यंजनंचैवघृतंतैलंतथैवच लेह्यंपेयंचविविधंहस्तदत्तंनभक्षयेत् ताम्रेगव्यंकांस्येनारीकेरेक्षुरसौसगुडंदधिसगुडं

मार्द्रकंच मधसमं सैंधवसामुद्रभिन्नभत्यस्लवणभक्षणं मृद्भक्षणंच गोमांससमं उदक्यामपि चांडालं श्वानं कुक्कुरमेवच भुंजानो यदि पश्ये
ततदन्नं तु परित्यजेत् भुंजानस्य गुदस्रावे उपवासः पंचगव्यंच आपोशनोत्तरं प्राणाहुतेः प्राक् तत्स्रावे स्नानं षट् प्राणायामाः भुंजानस्या
शौचमासौ ग्रासं त्यक्त्वा स्नानं ग्रासाशने उपवासः सर्वाशने त्रिरात्रं विष्ठादिस्पर्शे स्नानं प्राणायामत्रयंच चांडालपतितोदक्यावाक्यं श्रुत्वा
भुंजने एकोपवासः स्नात्वा शतगायत्रीजपो वा कलह घरट्टोलूखलमुसलानां यावच्छब्दस्तावदभोजनं अथैकपंक्त्यानाम्भोयाद्ब्राह्मणैः
स्वजनैरपि कोपि जानाति किंकस्य प्रच्छन्नं पातकं भवेत् ततो भिना भस्मना नस्तंभन सलिलेन च द्वारेण वच मार्गेण पंक्तिभेदं चरेद्बुधः केश
पिपीलिकामक्षिकाभिः सह पक्वमन्नं त्यजेदेव पाकोत्तरं केशपिपीलिकादिकीटकमक्षिकासंसृष्टे गवाघ्राते वान्ने सलिलं भस्म मृद्वापि
भक्षे प्रक्ष्यं विशुद्धये इति विज्ञानेश्वरः शूद्रान्नं शूद्रदत्तब्राह्मणान्नं रात्रिपर्युषितं रजस्वलाचांडालपतितादिदृष्टं काकादिपक्ष्युच्छिष्टमभो
ज्यं स्नेहपक्वं मंडकादि च पर्युषितं ग्राह्यं अवत्साया गारनिर्दशानां गोमहिष्यजानां गर्भिण्या एककालांतरितदोहाया यमलसूत्रवतस्त
न्योरजवर्जं हिस्तनीनामुष्ट्रीवडवाघोरारण्यकमृगादेरवंश्वक्षीराणि वर्ज्यानि शिग्रुं हिंगू वर्ज्यं रक्तं वृक्षनिर्यासं पुरीपस्थानोत्पन्नतंडुली
यकादिकं देवाद्यदत्तं विनाकृतं संयावपायसापूपशष्कुलीकृसरं वर्जयेत् शणकुसुंभालाबुवार्ताककोविदारवटादिफलानि मातुलिंगं
नवर्ज्यं पलांडुलशुनगृंजनभक्षणे चांद्रायणं भुंजानेषु परस्परस्पर्शे अन्नत्यागः पात्रस्थान्नभक्षणे स्नात्वाष्टोत्तरशतगायत्रीजपः अ-

धिक भोजनेसहस्त्रंभुंजानस्याशुचिनाविप्रेण स्पर्शेन्नत्यागः भुक्तोच्छिष्टस्पर्शेसवर्णेस्नानंजपोवा असवर्णेतूपवासः भुक्तोच्छिष्टस्य
श्वशूद्रादिस्पर्शेउपोष्यपंचगव्यंरजकादिस्पर्शेत्रिरा॰ परिवेषणंकुर्वन्नुच्छिष्टस्पर्शेपयोदधिघृतादिलघुद्रव्यमत्यजंन्नाचांतःशुचिः
भक्ष्याद्यन्नस्यत्यागएववस्त्रेविकल्पः परिवेषणादिकालेरजोदृष्टौतत्स्पृष्टान्नत्यागः ॥ ॥ ॥ ॥ ॥ ॥.भोजनात्
उच्छिष्टशेषान्नं रौरवेपूयनिलयेपद्मार्बुदनिवासिनां प्राणिनांसर्वभूतानामक्षय्यमुपतिष्ठत्विति दद्यात् आचांतोप्यशुचिस्ता
वद्यावत्पात्रमनुद्धृतं उद्धृतेप्यशुचिस्तावद्यावन्नोन्मृज्यतेमही पर्णस्याग्रंचमूलंचशिरांचैवविशेषतः चूर्णपर्णंवर्जयित्वातांबू
लंखादयेद्बुधः अनिधायमुखेपर्णंपूगंवैभक्षयेन्नच इतिपंचमभागकृत्यं इतिहासपुराणाद्यैःषष्ठसप्तमकौनयेत् अष्टमेलोकयात्रा
तुबहिःसंध्यौततःपुनःसायंसंध्याप्रातःसंध्यावत् अग्निश्चमामन्युश्च॰ यदन्हापापमकार्षं॰ अहस्तदवलुंपतु॰ सत्येज्योतिषि
जुहोमिस्वाहेतिमंत्राचमनेविशेषः पश्चिमाभिमुखस्तिष्ठन् अर्घ्यंदद्यात् ऊर्ध्वजानुरुपविश्य प्रत्यङ्मुखएवगायत्रींजपेत्
सायंहोमसूक्तएव सायंवैश्वदेवेपुनःपाकः अतिथिंसंपूज्य घटित्रयानंतरंसार्धयामात्प्राक् भुक्त्वाशयीत भोजनकालेदीपनाशे
पात्रमालभ्यसूर्यंस्मृत्वापुनर्दीपंदृष्ट्वापात्रस्थंभुंजीतनान्यत् श्राद्धतत्पूर्वदिनेपातधृतिसंक्रांत्यादिषुनिशिभोजनं चतुर्थप्र
थमौयामौविद्याभ्यासेनयेन्निशि महरद्वयशायीतुब्रह्मभूयायकल्पते प्राक्प्रत्यक्दक्षिणस्यां शिरःकृत्वाशयीतनकदाचिदुदक्

शिराःप्राभिसृत्कंज स्नात्सुखशायिनः स्मृत्वाविष्णुंनत्वास्वप्यात् अगस्तिर्माधवश्चैवमुचुकुंदोमहामुनिः कपिलोमुनिःरास्तीकः पंचै-
तेसुखशायिनः नसंध्यायांनध्यानेनगोगेहेनदेवविप्रगुरूणांसुपरिनोच्छिष्टोनदिवानननग्नः शयीतनिद्राकालेतांबूलंमुखात्स्त्रियंशय्य
नाद्वाल्लातिलकंशिरसःपुष्पंत्यजेत् गर्भाधानप्रकरणोक्तकालेसार्द्धयामोत्तरंदीपेसत्यसतिवानिवीतंयज्ञोपवीतंकंठादौकृत्वापत्नींग-
च्छेत् अष्टम्यांचचतुर्दश्यांदिवापर्वणिमैथुनं कृत्वासचैलंस्नात्वातुवारुणीभिश्चमार्जयेत् पुनर्मामैत्वितिजपश्चोक्तएवंस्नानभोज-
नादिकेबहुविधविधिनिषेधाकुले आन्हिककर्मणिन्यूनाधिकदोषविधिनिषेधातिक्रमदोषपरिहारार्थप्रायश्चित्ताज्ञानेनतत्सांगतार्थप्रायश्चित्तसांगतार्थं
चविष्णुनामोच्चारणादिकंकार्यं प्रायश्चित्तान्यशेषाणितपःकर्मात्मकानिच यानितेषामशेषाणांकृष्णानुस्मरणंपरं यस्यस्मृत्याचनामोक्त्या
तपःकर्मात्मकादिषु न्यूनंसंपूर्णतांयातिसद्योवंदेतमच्युतं नाम्नोस्तियावतीशक्तिः पापनिर्हरणेहरेः तावत्कर्तुंनशक्नोतिपातकंपा-
तकीजनः लौकिकंवैदिकंकर्मेश्वरेर्पणीयं यत्करोषियदश्नासियज्जुहोषिददासियत् यत्तपस्यसिकौंतेयतत्कुरुष्वमदर्पणमित्युक्तेः
युगपत्सर्वकर्मार्पणेमंत्रः कामतोकामतोवापियत्करोमिशुभाशुभम् तत्सर्वंत्वयिसंन्यस्तंत्वत्प्रयुक्तः करोम्यहं अपारमान्हिकंकर्मेद-
हनंबहुभेदयुक् निःशेषमक्षमोवक्तुंयथामत्यवदल्लघु अनंतोपाध्यायजनिःकाशीनाथाभिधःसुधीः तुष्यतांतेनभगवांच्छ्रीनाथो
विठ्ठलप्रभुः इत्यनंतोपाध्या० काशी० विरचि० धर्म० द्वि० आन्हिकाचारप्रकरणंसमाप्तं॥ ॥अवश्यंभक्ष्यहृत्कृत्यमज्ञातच्छुभ[illegible]

काम्यं नैमित्तिकंचापिप्राय: सिंधुक्रमादथ अथाधानविचार:॥ तत्राधाननक्षत्रादिकालविचार: प्रथमपरिच्छेदेउक्त: आवसथ्याधानं
तुदारकालेदायविभागकालेवा अग्निर्वैवाहिकोयेननगृहीत:प्रमादिनापितस्तुपरतेतेनगृहीतव्य:प्रयत्नत: गृह्याग्निहीनस्यान्नमभो-
ज्यंपितरिज्येष्ठभ्रातरिवासाग्निकेकनिष्ठादेरविभक्तस्यनिरग्नित्वदोषोन एवंज्ञानाध्ययनादिनिष्ठस्यापिनदोष: गृहस्थस्याप्यध्य-
यनोक्ते: स्मार्ताधानमपिज्येष्ठेभ्रातरि अकृताधानेसतिनकार्यमितिनिर्णयसिंध्वादौगार्ग्योक्ति: अत्रैवंनिर्णयोभाति यत्रज्येष्ठेन
दायादपक्षमवलंब्यविवाहकालेयावज्जीवमौपासनंकरिष्येइत्येवंसंकल्पपूर्वकंविवाहाग्निर्नगृहीतस्तद्विषयोयंकनिष्ठस्यनिषेध: येनज्येष्ठेन
विवाहकालेतथासंकल्पपूर्वकमग्नि:परिगृहीत:सपश्चात्परिचरणाभावेनाविद्यमानाग्निकोप्युच्छिन्नाग्निरेवनत्वकृताधानइतितत्र
कनिष्ठस्याधानेदोषोनेति अत्राधिकारिणोपिभ्रातुरनुज्ञयाकनिष्ठस्याधानंप्रवर्तितेविवाहस्त्वननुज्ञयापिन एवंपितुरनुज्ञयाप्याधानंस-
न्यस्तच्छिन्नहस्तादौयद्वाषंढादिदूषणेजनकेसोदरेज्येष्ठेकुर्याद्वेतर:क्रियामित्यादिविशेष: विवाहप्रकरणेपरिवेतृप्रसंगेउक्त: अथ
शूद्रसं॰विचार: गर्भाधानपुंसवनानवलोभनसीमंतोन्नयनजातकर्मनामकर्मनिष्क्रमणान्नप्राशनचौलोपनयनमहानाम्न्यादिव्रत
चतुष्टयसमावर्तनविवाहाइतिषोडशसंस्काराद्विजानां जातकर्मनामकर्मनिष्क्रमणान्नप्राशनचूडाविवाहाइतिषट् द्विजस्त्रीणां
तत्रविवाह:समंत्रकोन्येमंत्ररहिता:गर्भाधानसीमंतौस्त्रीपुरुषसाधारणौ॥ चूडांतानविवाहश्चेतिदशामंत्रका: शूद्राणांबहुसंम

तन्मिति शूद्रकमलाकरे शूद्राणां पंचमहायज्ञा अप्युक्ताः केचिद्वैदिकमंत्रेणोपनयनमप्याहुः ब्राह्मे तु विवाहमात्रं संस्कारं शूद्रोपि लभतां सद्भिः कृतं अत्र सदसच्छूद्रगोचरत्वेन वा परंपराप्राप्तप्रकारेण वा व्यवस्था अस्य द्विजसेवा वृत्तिः आपदि वाणिज्यशिल्पादि शूद्रेण लवणादिविक्रयं मधमांसं च न कपिलाक्षीरपानेन ब्राह्मणीगमनेन च वेदाक्षरविचारेण शूद्रश्चांडालतां व्रजेत्। शूद्रो वर्णश्चतुर्थोपि वर्णत्वाद्धर्ममर्हति वेदमंत्रस्वधास्वाहावषट्कारादिभिर्विना स्त्रीशूद्रधर्मेषु व्रतादिषु सर्वत्र विप्रेण मंत्रः पठनीयः सोपि पौराण एव भारतपुराणयोः श्रवणे स्त्रीशूद्रयोरधिकारो न त्वध्ययने आवश्ये चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः शूद्रस्य पंचमहायज्ञश्राद्धादिकर्माणि कातीयसूत्रानुसारेणेति मयूखे आगमोक्ता विष्णुशिवादिमंत्राः नमोंताः प्रणवरहिताः पुराणादिनाश्रवणनिदिध्यासनादि कृत्वा ब्रह्मज्ञानमपि स्त्रीशूद्रैः संपाद्य उपनिषच्छ्रवणे तु नाधिकार इति शूद्रस्य तदनादरश्रवणादित्यधिकारिणि शूद्रस्य सर्वश्राद्धान्यामेनैव केचित्सर्वप्रजानां काश्यपत्वात् सर्वशूद्राणां काश्यपगोत्रं तच्च श्राद्ध एव कीर्तनीयं नान्यत्रेत्याहुः एवं शांतिकादावधिकारोपि मद्वारैव यदि विप्रः शूद्रदक्षिणामादाय वैदिकमंत्रैस्तदीयहोमाभिषेकादि करोति तदा तत्र शूद्रस्य तु पुण्यफलभाक् विप्रस्तु महाप्रत्यवायीति माधवः अहिंसासत्यास्तेयशौचेंद्रियनिग्रहदानशमदमक्षमादयः शूद्रादिसर्वसाधारणा धर्माः परपदनाशकाः स्वस्तिवाचनादि शूद्रकर्मणां प्रयोगास्तु शूद्रकमलाकरे ज्ञेयाः अथ वापीकूपाद्युत्सर्गादि गृह्यग्राम्यया ग्रामनद्यदक्षिणेन कृतवायव्यमुमध्ये च दुष्टफलः फल

ध॰सिं॰ कूपः शोषदिस्कशुभः वापीकूपतडागाद्युत्सर्गेउत्तरायणेमाघादिमासषट्कस्यशुक्लपक्षेषुप्रशस्तः जलक्षयसंभावनायांकार्तिकमार्गशी तृ॰प॰पृ

१०८ र्षयोरपि नकालनियमस्तत्रसलिलंकारणंपरमित्युक्तेः चतुर्षुविष्णुशयनमासेषुशुक्रास्तादौचवर्ज्यं अश्विनीरोहिणीमृगपुष्यम-

घोत्तरामूलश्रवणादित्रयहस्तज्येष्ठानुराधारेवतीषुद्वितीयातृतीयापंचमीसप्तमीदशम्येकादशीत्रयोदशीतिथिषुबुधगुरुशुक्रसो

मवारेषुजलोत्सर्गः शुभः उत्सर्गाभावेजलंनग्राह्यं वापीकूपतडागादौयज्जलंस्यादसंस्कृतंनस्पृष्टव्यंनपेयंचपीत्वाचांद्रायणंचरे

त् उत्सर्गप्रयोगोन्यतोज्ञेयः अथवृक्षादिरोपणं अश्विनीरोहिणीमृगपुष्यमघोत्तरात्रयहस्तचित्राविशाखानुराधामूलशततारका

रेवतीषुसत्तिथिवारेषुवृक्षलतारोपःशस्तः आश्लेषायांसोमवारः सौम्योलग्नेबलान्वितः योगेस्मिन्रोपयेदिक्षुकदलीक्रमुकादिका

न् नारीकेलान्यपेड्रूमावश्विन्यांलग्नगेरवौ नागवल्लींगुरौलग्नेचंद्रस्तांशास्थितेसति अथमूर्तिप्रतिष्ठा प्रतिष्ठासर्वदेवानांवैशाखज्येष्ठ

फाल्गुनेचैत्रेतुस्या द्विकल्पेनमाघेविष्णवन्यमूर्तिषु सौम्यायनेशुभामोक्तानिंदितादक्षिणायने मातृभैरववाराहनरसिंहत्रिवि-

क्रमाः दक्षिणेप्ययनेस्थाप्यादेव्यश्चेत्सूर्विरेपरे विष्णोः शस्ताश्चैत्रमासाश्विनश्रावणका अपिमाघफाल्गुनवैशाखज्येष्ठाषाढसह

स्यंच श्रावणेचनभस्येचलिंगस्थापनमुत्तमं देव्यामाघेश्विनेमासेप्युत्तमासर्वकामदा अश्विनीरोहिण्युत्तरात्रयमृगपुनर्वसूपुष्यह १०८

स्तचित्रास्वात्यनुराधाश्रवणत्रयरेवतीषुशनिभौमान्यवासरेदर्शरिक्तान्यतिथौसर्वदेवप्रतिष्ठाशुभा श्रवणेकृत्तिकादिविशाखांतेषु च

द्वादश्यांचविष्णोः प्रशस्ताः चतुर्थीगणेशस्योक्तानवमीमूलमंत्रदेव्याः तथास्त्वस्त्वनसत्राणिसर्वेषां यथादौशिवस्यहस्त्वः सूर्यस्येत्यादिदुं
स्वयेहीनाकर्तारंमंत्रहीनातुऋत्विजं स्त्रियंलक्षणहीनातुनप्रतिष्ठासमारिपुः ब्रह्मातुब्राह्मणैः स्थाप्योगायत्रीसहिताः प्रभुः सर्ववं
र्णैस्तथाविष्णुः प्रतिष्ठाप्यः स्वरवार्थिभिः मातृभैरवाद्याः सर्वैः शिवलिंगंयतिनापिपुराणप्रसिद्धंजीर्णलिंगंस्त्रीशूद्रैरपिपूज्यंनूतनस्यापि
नलिंगंस्त्रीशूद्रोवापिनस्पृशेत् शिवादिप्रतिष्ठापांस्त्रीशूद्रादेर्नाधिकारः शूद्रोवानुपनीतोवास्त्रियोवापतितोपिवा केशवंवा शिवंवापिस्पृष्ट्वानरकम्
श्नुते स्थिरप्रतिमाः प्राङ्मुखीरुदङ्मुखोयजेत चलप्रतिमासुप्राङ्मुखः सौवर्णीराजतीताम्रीमृन्मयीप्रतिमाभवेत् पाषाण धातुयुक्ता
वाकांस्यपित्तलयोरपि अंगुष्ठपर्वमानात्साबितस्तिंयावदेवतु गृहेषुप्रतिमाकार्यानाधिकाशस्यतेबुधैः मृद्दारुलाक्षागोमेदमधूच्छिष्टेन
चेतिकेचित् श्रीमद्भागवते शैलीदारुमयीलौहीलेप्यालेख्याचसैकती मनोमयीमणिमयीप्रतिमाष्टविधास्मृता लौहीसौवर्णीदारुमधू
कवृक्षस्यैवसप्तांगुल्यधिकाद्वादशांगुलपर्यंतागृहेप्रतिमेतिदेवीपुराणे अर्चकस्यतपोयोगादर्चनस्यातिशायनात् अभिरूप्याच्चबिंबानांदेवः
सांनिध्यमृच्छति प्रतिमापट्टयंत्राणांनित्यंस्नानंनकारयेत् कारयेत्पर्वदिवसेयदावामलधारणं पार्थिवलिंगपूजादिविचारोद्वितीयपरिच्छे
देउक्तः अथपंचसूत्रीनिर्णयः लिंगोच्चतालिंगविस्तारोलिंगस्यौच्यंपीठविस्तारः प्रनालिकामानंचेतिपंचसूत्राणि तत्रलिंगमस्तकविस्ता
रंलिंगोच्चतातुल्यंकृत्वातत्त्रिगुणसूत्रवेष्टनांहेलिंगस्यौल्यंकृत्वालिंगात्सर्वतोलिंगसमविस्तारंपीठंवर्तुलंकुर्यात् पीठोच्चतालिंगोच्चता

द्विगुणा पीठाद्वहिः पीठोत्तरभागे लिंगसमदीर्घा मूले दैर्घ्यसमविस्तारा अग्रे तदर्धविस्तारा प्रनालिका लिंगोच्चत्वात्त्रिगुणा पीठोच्चत्वं तेनैव निमितं
अथ पीठमध्यभागे लिंगाद्विगुणस्थूलं पीठोच्चत्वात्तृतीयांशेन कंठं कुर्यात् कंठस्योर्ध्वाधोभागयोः समं च मेहृयं कृत्वा पीठोपरि लिंगविस्तारष
ष्ठांशेन मेखलां कृत्वा तत्संलग्नं तत्समं खातं कुर्यात् प्रनालिकायामपि विस्तारस्तृतीयांशेन खातः पीठवन्मेखला च कार्येति गृहे लिंगद्वयं नार्च्यं
शालग्रामद्वयं तथा द्वे चक्रे द्वारकायास्तु नार्चेत्सूर्यद्वयं तथा शक्तित्रयं त्रिविघ्नेशं द्वौ शंखौ नार्चयेत्सुधीः अन्यत्र तु चक्रांकमिथुनं पूज्यं न तु
चक्रांकमर्चयेदित्युक्तं तेन विकल्पः नार्चयेच्च तथा मत्स्यकूर्मादि दशकं गृहे अग्निदग्धाश्च भग्नाश्च न पूज्याः प्रतिमा गृहे भग्ना वा स्फुटिता वा
पि शालग्रामशिला शुभा शालग्रामाः समाः पूज्याः समेषु द्वितयं नहि विषमा नैव पूज्यंते विषमेष्वेक एव हि सस्वर्णशालग्रामदाने पृथ्वी
दानफलं शतशालग्रामपूजने ऽनंतफलम् अविभक्तानामपि भ्रातृणां देवतार्चनमग्निहोत्रं संध्या ब्रह्मयज्ञश्च पृथगेव स्त्री शूद्रो वास्प
र्शरहितं शालग्रामचक्रांकितबाणलिंगानि नार्चयेत् शूद्रो वानुपनीतो वा सधवा विधवांगना दूरादेवास्पृशन्पूजां प्रकुर्याच्छिवकृष्णयोः ॥
शालग्रामबाणयोरेव स्पर्शननिषेधो न तु प्रतिमादौ सर्ववर्णैस्तु संपूज्याः प्रतिमाः सर्वदेवताः लिंगान्यपि तु पूज्यानि मणिभिः कल्पितानि चे
त्युक्तेः शालग्रामशिलार्चानामध्यमा याचिता धमा उक्तलक्षणसंपन्ना पारंपर्यक्रमागता उत्तमा सा तु विज्ञेया गुरुदत्ता तु तत्समा तत्राप्या
मलकीतुल्या पूज्या सूक्ष्मैव या भवेत् यथा यथा शिला सूक्ष्मा तथा स्यात्तु महत्फलम् यवमात्रं तु गर्तः स्याद्यवार्धं लिंगमुच्यते शिवनाभि-

रितिख्यातस्त्रिषुलोकेषुदुर्लभः शालग्रामशिलायास्तु प्रतिष्ठानैवविद्यते महापूजां तुकृत्वादौ पूजयेत्तांततोबुधः बाणलिंगानिराजेंद्र ख्यातानिभुवनत्रये नप्रतिष्ठानसंस्कारस्तेषामावाहनंतथा वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाविमाद्यैः क्रमेणपूज्याः तल्लक्षणंतु पंचचक्रोवासुदेवःषड्भिश्चक्रैःसप्तभिःसंकर्षणएकादशभिरनिरुद्धइति प्रणवोच्चारणाच्चैवशालग्रामशिलार्चनात् ब्राम्हणीगमनाच्चैव शूद्रश्चांडालतांव्रजेत् दीक्षायुक्तैस्तथाशूद्रैर्मद्यपानादिवर्जितैः कर्तव्यंब्राह्मणद्वाराशालग्रामशिलार्चनम् विष्णुप्रीतिकरंनित्यंतुलसीकाष्ठचंदनं कार्तिकेकेतकीपुष्पंयेनदत्तंहरेःकलौ दीपदानंचदेवर्षेतारितंतेनवैकुलं शालग्रामसंबंधितोप्यवच्चक्रांकशिलातोयस्यापिपानविधानात्सापिशालग्रामसन्निधौपूज्या अग्राह्यंशिवनिर्माल्यंपत्रंपुष्पंफलंजलं शालग्रामस्यसंस्पर्शात्सर्वंयातिपवित्रतां मध्यमानामिकामध्ये पुष्पंसंगृह्यपूजयेत् अंगुष्ठतर्जन्यग्राभ्यांनिर्माल्यमपनोदयेत् विनाभस्मत्रिपुंड्रेणविनारुद्राक्षमालया पूजितोपिमहादेवोनस्यात्तस्यफलप्रदः विनामंत्रंनबिभृयाद्रुद्राक्षान्भुविमानवः पंचामृतंपंचगव्यंस्नानकालेप्रयोजयेत् रुद्राक्षस्यप्रतिष्ठायांमंत्रंपंचाक्षरंतथा त्र्यंबकादिकमंत्रंचतथातत्रप्रयोजयेत् अष्टोत्तरशतंकुर्याच्चतुःपंचाशदेकतु सप्तविंशतिमानावा मालाहीनानपूज्यते सप्तविंशतिरुद्राक्षमालयादेहसंस्थया यःकरोतिनरःपुण्यंसर्वंकोटिगुणंभवेत् अथरुद्राक्षतुलस्यादिसर्वजपमालानांसंस्कारः कुशोदकसहितैःपंचगव्यैर्मालांप्रक्षाल्य ॐ ह्रीं अंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअः कंखंगंघंङंचंछंजंझंञंटंठंडंढंणंतंथंदंधं

नंपंफंबंभंमंयंरंलंवंशंषंसंहंळंक्षं इत्येतानिपंचाशन्मातृकाक्षराणि अश्वत्थपत्रस्थापितमालायांविन्यस्य ॐ सद्योजातं॰ वामदेवा॰ अ
घोरे॰ तत्पुरुषा॰ ईशान सर्वविद्या॰ इतिपंचमंत्रान्जपित्वा सद्योजातेतिमंत्रेण मालांपंचगव्येन प्रोक्ष्यसितजलेन प्रक्षाल्य वामदेवे
तिचंदनेनाघृष्याघोरेतिमायांधूपयित्वातत्पुरुषेतिचंदनकस्तूर्यादिनालेपयित्वेशानइतिमंत्रेण प्रतिमणिंशतवारंदशवारंवाभिमंत्र्या
घोरइतिमंत्रेणमेरुंशतवारमभिमंत्रयेत् ततएतैरेवपंचभिर्मंत्रैर्मालांपंचोपचारैः पूजयेदिति बोपदेवः रुद्राक्षान्कंठदेशेदशन ३२ परि
मितान्मस्तकेविंशतिद्वे ४० षट्षट्कर्णप्रदेशेकरयुगलकृतेद्वादशद्वादशैव बाह्वोरिंदोःकलाभि १६ र्नयनफणकृतेएकमेकंशिखायांव
क्षस्यष्टाधिकंयः कलयतिशतकंसः स्वयंनीलकंठः रुद्राक्षदानादुद्रपदमाप्नोति पंचविंशत्पलंलिंगेष्वभ्यंगंकारयेदथ स्नापयेत्तिल
तैलेर्भ्यकरयंत्रोद्भवैः शिवं स्नानंपलशतंज्ञेयमभ्यंगःपंचविंशतिः पलानांद्विसहस्रेणमहास्नानंजलेनतत् पयोदधिघृतक्षौद्रशर्क
राद्यैस्ततः क्रमात्॥ शिवस्यसर्पिषास्नानंप्रोक्तंफलशतेनवै तावतामधुनाचैवदध्नाचपयसापिच पलसार्धसहस्रेणरसेनैवेक्षवेणच
भक्त्याचोष्णोदकैः शीतोदकैःसंस्नापयेच्छिवं श्रीविष्णुंक्षीरदध्यादैः क्रमाद्दशगुणोत्तरैः स्नापयेत्किंचिदुष्णैश्चक्षीराद्यैःपंचभिःसमैः
॥ अथश्रीविष्ण्वादिपंचायतनानि विष्णुर्मध्येशिवेभास्यसूर्यार्याईशदिक्क्रमात् शंभौमध्येविष्णुसूर्यगजास्यार्यास्तथाक्रमात् रवौमध्य
गतेरुद्रगणेशाच्युतशक्तयः मध्येदेवीविष्णुशिवगणेशारवयः क्रमात् २ मध्येगणपतिर्विष्णुशिवसूर्याम्बिकास्तथा ईशानादिक्रमेणैवपं

चायतनपंचकं ३ अथकेशवादिचतुर्विंशतिनिर्णायकबोपदेवश्लोकः भिंधोव्याख्यानः नस्यायंसंग्रहः केशवादिश्चतुर्बाहोर्दक्षिणोर्ध्वकर
क्रमात् शंखचक्रगदापद्मायुधैः केशव उच्यते नारायणः पद्मगदाचक्रशंखायुधैः क्रमात् माधवश्चक्रशंखाभ्यांप नगदायामवेद्
गोविंदोगदयापद्मशंखचक्रैः क्रमाद्भवेत् विष्णुः पद्मेनशंखेनचक्रेणगदयाक्रमात् ३ शंखपद्मगदाचक्रैर्मधुसूदनईरितः त्रिविक्रमो
गदाचक्रशंखपद्मैस्तुक्रमात् ४ वामनः शंखचक्राभ्यांपद्मेनगदयापिच चक्रेणगदयाशंखपद्माभ्यांश्रीधरः स्मृतः ५ हृषीकेशः स्मृत
श्चक्रपद्मशंखगदायुधैः पद्मनाभः पद्मचक्रगदाशंखैः क्रमात्स्मृतः ६ दामोदरः शंखगदाचक्रपद्मैरुदीर्यते संकर्षणः शंखपद्मचक्रा
युधगदायुधैः ७ वासुदेवश्चक्रगदापद्मशंखाद्यलक्षणैः प्रद्युम्नः स्याच्छंखगदापद्मचक्रैः क्रमाद्धृतैः ८ अनिरुद्धोगदाशंखपद्मचक्रै
रस्तुक्रमात् पद्मशंखगदाचक्राख्यधैः स्यात्पुरुषोत्तमः ९ अधोक्षजोगदाशंखचक्रपद्मैः करस्थितैः नरसिंहः पद्मगदाशंखचक्राख्यधै-
र्भवेत् १० अच्युतः पद्मचक्राभ्यांशंखेनगदयाक्रमात् जनार्दनश्चक्रशंखगदापद्माद्यबाहुभिः ११ उपेंद्रोगदयाचक्रपद्मशंखान्वितैः
करैः चक्रपद्मगदाशंखैः करस्थैः स्यात्क्रमाद्धरिः १२ श्रीकृष्णाख्योगदापद्मचक्रशंखैर्मतोविभुः इतिप्रोक्ताः केशवादिचतुर्विंशतिमू
र्तयः १३ अथसिंध्वनुसारेणदेवप्रतिष्ठाप्रयोगः यजमानोद्वादशादिहस्तंमंडपंकृत्वाग्नेयपूर्वतोवाहस्तमात्रंकुंडंस्थंडिलंवाकृत्वाम-
ध्येवेदींतदुपरिसर्वतोभद्रंग्रहनिर्ऋत्यांनाग्रहवेदींप्रासादसंस्कारमंडपसंस्कारेवाचिकीर्षितेनैर्ऋतेवास्तुपीठंरु-

ध·सिं त्वा अस्यांमूर्तौलिंगेवादेवतासान्निध्यार्थंदीर्घायुर्लक्ष्मीसर्वकामसमृध्यक्षय्यसत्वकामोमुकदेवमूर्तिप्रतिष्ठांकरिष्येइतिसंकल्प्यस्वस्ति तृ· प·पु
१०३ वाचनादिनांदीश्राद्धांते आचार्यंवृत्वाष्टौचतुरोवाऋत्विजोवृत्वापूजयेत् आचार्योयदत्रेतिसर्षपान्विकीर्यापोहिष्ठेतिकुशोदकेभूमिं
प्रोक्ष्यदेवा आयांतुयातुधाना अपयांतुविष्णोदेवयजनंरक्षस्वेतिभूमौप्रादेशंकृत्वा मंडपप्रतिष्ठांतोद्दिष्टमूर्तिप्रतिष्ठाग्रंथादवगंत
व्यस्तदनुसारेणकृत्वानकृत्वावा यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदा स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु अपक्रामंतु॰ पं·
चगव्यहिरण्ययवदूर्वाश्वत्थपलाशपर्णान्युदकुंभेप्रक्षिप्यताभिरद्भिरापोहिष्ठेतितिसृभिर्हिरण्यवर्णाः शुचयःपावकायासुजातःकश्य
पोयास्विंद्रः अग्निंयागर्भंदधिरेविरूपास्तान आपः शं॰ स्योनाभवंतु यासां॰ राजावरुणोयातिमध्येसत्यानृ॰ अवपश्यंजनानां मधु
श्चुतः शुचयोयाः पावकास्ता॰ यासांदेवादिविकृण्वंतिभक्षंया अंतरिक्षे बहुधाभवंति याःपृथिवींपयसोंदंतिशुक्रास्ता॰ शिवेनमा
चक्षुषापश्यतापः शिवयातनुवोपस्पृशतत्वचंमे सर्वां॰ अग्नीं॰ रप्सुषदोहुवेवोमयिवर्चोबलमोजोनिधत्त ४ पवमानः सुवर्जनः प
वित्रेणविचर्षणिः यःपोतासपुनातुमा पुनंतुमादेवजनाः पुनंतुमनसाधिया पुनंतुविश्वआयवः जातवेदःपवित्रवत् पवित्रेणपुनाहि
मा शुक्रेणदेवदीद्यत् अग्नेक्रत्वाक्रतूं॰ रनु॰ यत्तेपवित्रमर्चिषि अग्नेविततमंतरा ब्रम्हतेनपुनीमहे उभाभ्यांदेवसवितः पवित्रेण
सवेनच इदंब्रम्हपुनीमहे वैश्वदेवीपुनतीदेव्यागात् यस्यैबव्हीस्तनुवोवीतपृष्ठाः तयामदंतःसधमाद्येषु वयं॰ स्यामपतयोरयी

र्मा वैश्वानरो रश्मिभिर्मा पुनातु वातुः प्राणेनेषिरो मयोभूः द्यावापृथिवी पयसा पयोभिः ऋतावरी यज्ञिये मा पुनीतां बृहद्भिः सवितः
स्तृभिः वर्षिष्ठैर्देवमन्मभिः अग्ने दक्षैः पुनाहि मा येन देवा अपुनत येनापो दिव्यंकशः तेन दिव्येन ब्रह्मणा इदं ब्रह्म पुनीमहे यः पावमानीरध्ये
ति ऋषिभिः संभृतं २ रसं सर्वं २ स पूतमश्नाति स्वदितं मातरिश्वना पावमानीर्यो अध्येति ऋषिभिः संभृतं २ रसं तस्मै सरस्वती दुहे क्षीरं २
सर्पिर्मधूदकं पावमानीः स्वस्त्ययनीः ४ सुदुघाहि पयस्वतीः ऋषिभिः संभृतो रसः ब्राह्मणेष्वमृतं २ हितं पावमानीर्दिशंतु नः इमं लोकमथो
अमुं कामान्समर्धयंतु नः देवीर्देवैः समाभृताः पावमानीः स्वस्त्ययनीः सुदुघाहि घृतश्चुतः ऋषिभिः संभृतो रसः ५ ब्राह्मणेष्वमृतं २ हितं
येन देवाः पवित्रेण आत्मानं पुनते सदा तेन सहस्रधारेण पावमान्यः पुनंतु मां प्राजापत्यं पवित्रं शतोद्याम २ हिरण्मयं तेन ब्रह्मविदो
वयं पूतं ब्रह्म पुनीमहे इंद्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या यमो राजा प्रमृणाभिः पुनातु मा जातवेदा मोर्जयंत्या पुना
तु ६ इत्यनुवाकेनाभिषिच्य व्याहृतिभिरिदं विष्णुरिति च फलपवदूर्वाः समर्प्य रक्षोहणमिति देवहस्ते कंकणं बध्वा वाससाच्छाद्य अवत
हेळो उदुत्तममिति जलेऽधिवासयेत् अथ चल प्रतिष्ठायामग्निं मंत्रेण स्थाप्यान्वाद्ध्यात् चक्षुषी आज्येनेत्यंते ग्रहादिहोमपक्षे ग्रहान्
धिदेवतादीन्समिच्चर्वाज्येन वास्तुपीठदेवतांश्चान्वाधाने उद्दिश्य इंद्रं पृथिवीं शर्वं अग्निं अग्निमूर्तिं पशुपतिं यमं यजमानमूर्तिं उग्रं निर्ऋ
तिं सूर्यमूर्तिं रुद्रं वरुणं जलमूर्तिं भवं वायुं वायुमूर्तिं ईशानं कुबेरं सोममूर्तिं महादेवं ईशानं आकाशं भीमं एताः लोकपालमूर्तिमूर्तिप-

तिदेवताः पलाशोदुंबराश्वत्थशम्यपामार्गसमिद्भिः आज्याहुतिभिस्तिलाहुतिभिश्च प्रतिदैवतं प्रतिद्रव्यमष्टाष्टसंख्याकाभिः स्थाप्यदेवताम-
रूकं पलाशोदुंबराश्वत्थशम्यपामार्गसमित्तिलचर्वाज्यैः प्रतिद्रव्यमष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिसंख्यया वा अग्निर्यजुर्भिरित्यनुवाके
नविभ्यो देवाभ्यस्तिलाज्याभ्यां दशदशाहुतिभिः एवं द्वितीये पर्याये एता एव देवतास्तत्तत्संख्याकैस्तैरेव द्रव्यैरेवं तृतीये पर्याये एता एव देवतास्तत्त-
त्संख्याकैस्तैरेव द्रव्यैर्ब्रह्मादिमंडलदेवतास्तिलाज्याहुतिभिः प्रतिदैवतं दशदशसंख्याकाभिः शेषेण स्विष्टकृतमित्यादि० भूर्पे प्रधानदेवतार्थे
तूष्णीं चतुरो मुष्टीन्निरूप्य होमपर्याप्तं गृहीत्वा तत्र यवमोक्ष्य गोक्षीरेण चरुं श्रपयेदाज्यभागांते यजमान इदमुपकल्पितमन्वाधानोक्तद्रव्यजातं
मन्वाधानोक्ताहुतिसंख्यापर्याप्तमन्वाधानोक्ताभ्यो यक्ष्यमाणाभ्यो देवताभ्यो न ममेति त्यागं कुर्यात् गृह्यसिद्धान्नादिना ग्रहादिहोमं विधाय लो-
कपालमूर्तिमूर्तिपतिभ्यः समिच्चरुतिलाज्येन जुहुयात् प्रतिद्रव्यं होमांते देवं पादनाभिशिरसि स्पृशेत् आज्यहोमे चोत्तरतः सजलकुंभं
संपातानानयेत् तेषां मन्त्राः इंद्रायेंदो इतींद्रस्य स्योनेति पृथिवीमूर्तेः अघोरेभ्य इति तत्पतेः शर्वस्य अग्न आयाहीत्यग्नेः अग्निं दूतमित्यग्निमूर्तेः
नमः शर्वाय च पशुपतये चेति पशुपतेः यमाय सोममिति यमस्य असि हि वीरेति यजमानमूर्तेः स्तुहि श्रुतमिति नत्पतेरुग्रस्य असुन्वंतमिति नैर्ऋ-
तेः आकृष्णेनेति सूर्यमूर्तेः यो रुद्रो अग्नाविति तत्पतेरुद्रस्य इमं मे वरुणेति वरुणस्य शन्नो देवीति जलमूर्तेः नमो भवाय चेति भवस्य आनो नियु-
द्भिः० वायोः वात आवातु वायुमूर्तेः तमीशानं० ईशानस्य आप्यायस्व० कुबेरस्य वयं सोम० सोममूर्तेः तत्पुरुषाय० महादेवस्य अभि त्वा देव० ई-

शानस्य आदित्यरूपस्य० आकाशस्य नमउग्रायचेतिभीमस्य ततः स्थाप्यदेवमंत्रेणसमित्संचरूपायसचरुतिलाज्यहोमः प्रतिद्रव्यंहोमांतेदक्षपादना भिशिरस्पर्शः देवमंत्रश्चतांत्रिकोमूलमंत्रोदेवगायत्रीवावैदिकोवाग्राह्यः अग्निर्यजुर्भिः सवितास्तोमैः इंद्रउक्थामदैः मित्रावरुणावाशिषा अंगिरसोधि ष्णियैरग्निभिः मरुतः सदोहविर्धानाभ्यां आपः प्रोक्षणीभिः ओषधयोबर्हिषा अदितिर्वेद्या सोमोदीक्षया त्वष्टेध्मेनविष्णुर्यज्ञेन वसवआज्येन आ दित्यादक्षिणाभिः विश्वेदेवाऊर्जा पूषास्वगाकारेण बृहस्पतिः पुरोधया प्रजापतिरुद्गीथेन अंतरिक्षंपवित्रेण वायुपात्रैः अहं श्रद्धयास्वाहेत्य नुवाकेनतिलाज्ययोर्दशदशाहुतयः ततोदेवस्यपादौस्पृशेत् संपातजलेनदेवमभिषिंचेत् एवमेवद्वितीयपर्यायेणहुत्वादेवस्यनाभिंस्पृशेत् तृती यपर्यायेणहुत्वाशिरःस्पृशेत् प्रतिपर्यायंसंपाताभिषेकः एकपर्याये आहुतिसंख्या पलाशसमिधः १०२ औदुंबर १०२ अश्वत्थ १०२ शमी १०२ अपामार्ग १०२ आज्य १०२ तिल १०२ स्थाप्यदेवस्याष्टाविंशतिपक्षे समित्संचरु १४० चर्वाज्यतिलाः ८४ अनुवाकः २० मीलिताः १५०९ पर्यायत्र ये ४७ ६४ एवंहुत्वार्चांशोधयेत् देवंनत्वा स्वागतंदेवदेवेशविश्वरूपनमोस्तुते शुद्धेपित्वदधिष्ठानेशरुद्धिंकुर्मः सहस्वतामितिप्रार्थ्य उत्तिष्ठ ब्रह्मणस्पतइतिसर्वलिंगस्थाप्यमन्यत्तारणंकार्यं अग्निः सप्तिमिति सूक्तमग्निपदहीनंपठित्वातत्सहितंपुनःपठेत् एवमष्टशतमष्टाविंशतिवारं पठन्जलंपातयेत् ततोर्चांद्वादशवारंमृदाजलेनचप्रक्षाल्यमंत्रैः पंचगव्यैःकृत्वा पयः पृथिव्यांपयओषधीषुपयोदिव्यंतरिक्षेपयोधाः पय स्वतीः प्रदिशः संतुमह्यं आवोराजानमितिचसंस्नाप्य आप्यायस्वेतिपंचमंत्रैः पंचामृतेन संस्नाप्यलिंगंचेन्नमस्तेरुद्रइत्याभिः संस्नाप्य

घृताभ्यंगमुद्वर्तनमुष्णोदकेनस्नानंचकृत्वागंधंदत्वासंपातोदकैरभिषिच्यसपल्लवैश्चतुर्भिःकुंभैःक्रमेण आपोहिष्ठा॰योवः शि॰तस्मा॰
आकल॰इतिसंस्नाप्य समुद्रज्येष्ठेतिचतसृभिराकलशेषितिचमिलितचतुःकुंभैःसंस्नाप्य औदुंबरादिपीठेचास्यपविश्यपरितोष्टदिक्षु
सजलकुंभेषुगंधपुष्पदूर्वाःक्षिप्त्वाद्यकुंभेसप्तमृदः द्वितीयपुष्करपर्णशमीविकंकतारमंतकत्वचःपल्लवांश्च तृतीयेसप्तधान्यंचतुर्थेपंच
रत्नं पंचमेफलपुष्पाणि षष्ठेकुशदूर्वालोचनाः सप्तमेसंपातोदकं अष्टमेसर्वौषधीःक्षिप्त्वाक्रमेणापोहिष्ठेतित्रिभिःहिरण्यवर्णाःशुच
यइतिचतुर्भिःपवमानानुवाकेनचाभिषिच्यएककुंभेशमीपलाशवटखादिरबिल्वाश्वत्थविकंकतपनसाम्रशिरीषोदुंबराणांपल्लवान्
कषायांश्चक्षिप्त्वाश्वत्थेवइत्याभिषिच्यपंचरत्नोदकेनहिरण्यवर्णाःशुचयइतिसंस्नाप्यवाससीदत्वापरिवितानंबध्नंतिकेचित् यज्ञोप
वीतगंधपुष्पधूपदीपान्दत्वा हिरण्यगर्भः॰य आत्मदा॰यःप्राणतो॰यस्यमे॰यनद्यौ॰यंक्रंदसी॰आपोहयत्॰यश्चिदापो॰८ इत्यष्टौ-
पीठदीपान्दत्वास्वर्णशलाकयातैजसपात्रस्थंमधुघृतंचगृहीत्वाचित्रंदेवाना॰तेजोसि॰शुक्रमस्यमृतमसि धामनामसि प्रियंदेवानामना
धृष्टंदेवयजनइतिमंत्राभ्यां॰ॐ नमोभगवतेतुभ्यंशिवायहरयेनमः हिरण्यरेतसेविष्णोविश्वरूपायतेनमइतिचदक्षिणसव्येदेवनेत्रेमंत्रावृत्त्या
लिखेत् अंजंतित्वत्यंजनेनांकृत्वादेवस्यत्वा॰इंद्रस्येंद्रियेणानज्मीतिमध्वाज्यशर्कराभिरक्ता अंजनेनपुनरंजयेत् तत आदर्शमस्यादि १०५
दर्शयेत् अत्रकर्ताचार्यायगामृत्विग्भ्योदक्षिणांदद्यात् आचार्यं प्रत्यृचमादौप्रणवंवदन्पुरुषसूक्तेन स्तुत्वावंशपात्रस्थपंचवर्णौदने

नदेवंनीराजयित्वारुद्रायचतुष्पथादौदद्यात् मंत्रास्तु ॐ नमोरुद्रायसर्वभूताधिपतये                    दीपमूल
धरायोमादर्थितायविश्वाधिपतयेरुद्रायवैनमोनमः शिवमगार्हितंकर्मास्तुस्वाहेति अश्वत्थपर्णेभूतेभ्योनमइति अथाचार्यः सर्व-
तोभद्रेदेवताआवाहयेत् मध्येब्रम्हाणं पूर्वादिदिक्षुइंद्रादिलोकपालान् इशानेंद्राद्यंतरालेषु वसून १ रुद्रान् २ आदित्यान् ३ अश्वि-
नौ ४ विश्वान्देवान् ५ पितॄन् ६ नागान् ७ स्कंदवृषौ ८ ब्रम्हेशानाद्यंतरालेषु दक्षं १ विष्णुं २ दुर्गान् ३ स्वधाकारं ४ मृत्युरोगान् ५ समुद्रान्
सरितः ६ मरुतः ७ गणपतिं ८ मध्येपृथिवींमेरुंसंस्थाप्यदेवंचावाह्यप्रागादिषु वज्रंशक्तिं दंडंखड्गं पाशं अंकुशंगदां शूलं तद्बाह्येगौत-
मंभरद्वाजंविश्वामित्रंकश्यपंजमदग्निंवसिष्ठमत्रिमरुंधतींच तद्बाह्येनवग्रहान् तद्बाह्येऐंद्रींकौमारींब्राह्मीं वाराहींचामुंडांवैष्णवीं
माहेश्वरींवैनायकीं एतानामभिरावाह्यसंपूज्य प्रतिमापादेवंतन्मंत्रेणावाह्यमंडलमध्येप्रतिमासुप्रतिष्ठितोभवेतिनिवेश्यसंपूज्य
वन्हौमंडलदेवतानांनामभिस्तिलाज्येन दशदशाहुतीर्हुत्वापुष्पांजलिंसमर्प्यनमोस्तुहृदितिदेवंनत्वामंडलादुत्तरतः स्वस्तिकेमंचकं तदु
परिशय्यांकृत्वाभिष्ठेतिदेवमुत्थाप्यमंगलघोषैःशय्यायांदेवमुपवेश्य पुरुषसूक्तोत्तरमहान्यासनारायणाभ्यांस्तुत्वादेवेन्यासंकुर्यात्
तथाहिपुरुषात्मनेनमः प्राणात्मने० प्रकृतितत्वाय० बुद्धितत्वाय० अहंकारतत्वाय० मनस्तत्वाय० इतिसर्वांगेषु प्रकृतितत्वाय० बुद्धित
त्वाय० त्वदिशब्दतत्वाय० शिरसिस्पर्शतत्वाय० त्वचिरूपतत्वाय० त्वदिएवंरूपेवरसगंधश्रोत्रत्वक्चक्षुर्जिव्हाघ्राणवाक्पाणिपादपा

५·सिं पूपस्वस्थपिथ्यप्तेजोवाय्वाकाशसत्वरजस्तमोदेहतत्वानिर्विन्यसेत् ततः पुरुषसूक्तार्धर्चं हृदयं करयोः तदुत्तरहृदयं जान्वोः तदुत्तरसूर्यक- त·प्र
१०६ ट्योः ततः तिस्रोनाभिहृत्कंठेषु ततो हृदयं बाह्वोः ततो हृदयं नासयोः ततो हृदयमक्ष्णोः अंत्यां शिरसि ततः स्कन्दशायी भवेदिति शय्यायां दे-
वं स्थापयित्वा मंडलशय्ययोरंतरालगतकर्मेति शेषं दत्वास्विष्टकृदादिहोमशेषं समाप्य मंडलदेवताभ्यो नाममंत्रैश्चरुणा बलीन्दद्यात् नी-
वारचरुशेषेणादिग्बलिं ततो धामंतइति पूर्णाहुतिं जुहुयात् इत्यधिवासनं अथ स्थिरार्चायां क्रमो विशेषश्च संकल्पादि जलाधिवासांत स्न-
स्नादेवं नत्वा स्वागतं देवदेवेशेत्यादि प्रार्थनोत्थापनाग्न्युत्तारणादि नेत्रोन्मीलनांतं पूर्ववत् तत्र स्थिरे शिवलिंगे स्वर्णसूच्या गंधेन ॐ नमो
भगवते रुद्राय हिरण्यरेतसे परायपरमात्मने विश्वरूपायोमाप्रियाय नम इत्युक्त्वांजनादिनाजयेदिति नेत्रोन्मीलने लिंगे विशेषः ततः स्न-
स्नुक्त्वादि मंडलदेवतास्थापनांतं ततो मंडले मूर्तिनिवेशस्ततः शय्यायां देवारोहणं ततः स्कृतिः पूर्वोक्तन्यासः ततः शय्यायां देवशयनं
ततोग्निस्थापनादि लोकपालमूर्तिमूर्तिपतिमोहांतं पूर्ववत् स्थाप्यदेवताहोमेनवाश्चरुर्नास्तिसक्षेवहवींषि ततश्च विष्णोः स्थिरार्चायां
पूर्वोक्तसमित्तिलाज्यहोमोत्तरं पुरुषसूक्तेन मस्तु चमाज्यं हुत्वा इदं विष्णुरिति पादौ स्पृष्ट्वा पुनस्ता एव हुत्वा अतो देवेति शिरस्पृष्ट्वा पुन-
स्ता एव हुत्वा पुरुषसूक्तेन सर्वांगं स्पृशेत् स्थिरलिंगं चेत्समिदाज्यतिलहोमांते यातइषुरित्यनुवाकांते नद्रापेइति सहस्राणित्यनुवाकाभ्यां १०६
चमस्त्रं चमाज्यं हुत्वा सर्वो वै रुद्र इति मूलं स्पृशेत् पुनस्ता एव हुत्वा कद्रुद्रायेति मध्यं पुनस्ता एव हुत्वा नमो हिरण्यबाहव इत्यग्रं पुनस्ता ए-

बहुस्त्वासर्वरुद्रेण सर्वांगंस्पृशेत् इत्यधिवासनेविशेषः परेद्युः पीठिकांन्स्नापयित्वामहीमृष्वित्यावाह्य आदितिर्द्यौरितिस्तुत्वान्द्रींनमइतिसं
पूज्यतेनैवपूर्णाहुतिंहुत्वा उत्तिष्ठब्रम्हणस्पतइतिदेवमुत्थाप्य पुष्पांजलिंदत्वापुरुषसूक्तेनस्तुत्वा उदुत्यमित्युत्थाप्य कनिक्रददितिसूक्ते-
नविष्णुं सद्योजातमितिपंचानुवाकैर्लिंगंगृहंप्रवेश्यपीठिकायामिंद्रादिनामभिरष्टरत्नानिक्षिप्त्वासप्तधान्यरौप्यमनःशिलाःक्षिप्त्वापायसेन
संलिप्यप्रणवेनांगन्यासंकृत्वास्रुवेणशलाकामंतरितांकृत्वासुलग्नेप्राणनिष्ठपरमेश्वरंस्मृत्वातोदेवेतिविष्णुंरुद्रेणलिंगंचस्थापयेत् तत
श्चरुहोमप्राणप्रतिष्ठादि ततःस्थिरार्चायामधिवासनेपरेद्युः कृत्येचविशेषोन्यत्सर्वमुक्तंवक्ष्यमाणचलार्चावदेव अथचलप्रतिष्ठायाम
धिवासनोत्तरेद्युरेकाहपक्षेसद्योवाउत्तिष्ठब्रम्हणइतिदेवमुत्थाप्यपुरुषसूक्तोत्तरनारायणाभ्यांस्तूयात् अथप्रायःस्थिरचलार्चयोः
साधारणप्रयोगः अथप्रतिष्ठांगंपरेद्युःहोमंकरिष्येइतिसंकल्प्य चक्षुषी आज्येनेत्यंतेस्थाप्यदेवंतन्मंत्रेण घृतपक्वव्रीहिचरुणादशा
हुतिभिरग्निंसोमंधन्वंतरिंकुहूमनुमतिंप्रजापतिंपरमेष्ठिनंब्रम्हाणमग्निंसोमं अग्निमन्नादं अग्निमन्नपतिंप्रजापतिंविश्वान्देवान्
सर्वान्देवानग्निंस्विष्टकृतंपूजांगहोमेविष्णुश्चेत्संकर्षणादिद्वादशदेवताः शार्ङ्गिणंपाग्निंपंसरस्वतींविष्णुंकुसरेणैकैकयाहुत्वाविष्णुंषड्
वारंकृसरेण शिवश्चेद्भवंशर्वंईशानंपशुपतिंरुद्रमुग्रंभीमंमहांतंकृसरेणैकैकया० भवस्यदेवस्यपत्नीमित्याद्यष्टौगणेशोदनेनैकैकयाभ
वस्यसुतमित्यादि ० हरिद्रौदनेनएकै० रुद्रंसप्तदशवारंशिवंशंकरंसहमानंशितिकंठंकपर्दिनं ताम्रमरुणमपगुरमाणंहिरण्यबाहुंस

स्पिंजरंबाहुसंहिरण्यमेताः सूसरेणैकैक॰ शेषेणस्विष्टकृतमित्यादि शूर्पेतूष्णींस्थाप्यदेवतार्थेचतुर्मुष्टीनग्न्यादिषोडशदेवताभ्योनाम्नाचतु
श्चतुर्मुष्टीभिरूप्यतथैवप्रोक्ष्यसघृतजलेभ्रपयित्वास्रुच्यावदानधर्मेणस्थाप्यदेवमंत्रेणदशाहुतीर्हुत्वानामभिर्जुहुयात् अग्नयेस्वाहा सोमाय॰
धन्वंतरये॰ कुह्वै॰ अनुमत्यै॰ प्रजाप ये॰ परमेष्ठिने॰ ब्रम्हणे॰ अग्नये॰सोमाय॰ अग्नयेन्नादाय॰ अग्नयेन्नपतये प्रजापतये॰ विश्वेभ्योदेवेभ्यः॰
सर्वेभ्योदेवेभ्यः॰ भूर्भुवः स्वरग्नयेस्विष्टकृतेस्वाहा १६ इतिसप्तते अग्नेसमिधः सप्तजिह्वः सप्तऋषयः सप्तधामप्रियाणि सप्तहोत्राः सप्तधात्वा
यजंतिसप्तयोनीरापृणस्वाघृतेन पुनस्त्वादित्यारुद्रावसवः समिंधतांपुनर्ब्रह्माणोवसुनीथयज्ञैः घृतेनत्वंतनुवोवर्धयस्वसत्याः संतुयजमा
नस्यकामाइतिमंत्राभ्यांपूर्णाहुतिंकृत्वाचार्योयाओषधीरितिपुष्पफलसर्वौषधीः समर्प्यसंपातोदकंताम्रपात्रे आदायदेवमंत्रेणशतवारमभि
मंत्र्यतेनदेवशिरसिसिंचेत् ततउत्तिष्ठब्रम्हणइतिदेवमुत्थाप्यविश्वतश्चक्षुरित्युपतिष्ठेत् एतेउत्थापनोपस्थानेचलार्चायामेव एवंध्यात्वाऽऽज
पेत् ब्रह्मणेन॰ विष्णवेन॰ रुद्राय॰ इंद्राद्यष्टभ्यो॰ वसुभ्यो॰ रुद्रेभ्यो॰ आदित्येभ्यो॰ अश्विभ्यां॰ मरुद्भ्यो॰ कुबेराय॰ गंगादिमहानदीभ्यो॰ अ-
ग्नीषोमाभ्यां॰ इंद्राग्निभ्यां॰ द्यावापृथिवीभ्यां॰ धन्वतरये॰ सर्वेशाय॰ विश्वेभ्योदेवेभ्यो॰ ब्रम्हणइति ततः संपातोदकेनयजमानाभिषेकः देवं
ध्यात्वाप्रतितिष्ठपरमेश्वरेतिपुष्पांजलिंदत्वासच्चिदानंदब्रम्हैवभक्तानुग्रहायगृहीतविग्रहंस्वायुधाढ्यंनिजवाहनाद्युपेतंनिजहृत्कमले १०७
स्थितंसर्वसाक्षिणमणीयांसंपरमेष्ठ्यसिपरमांश्रियंगमइतिमंत्रेणपुष्पांजलावागतंविभाव्यार्चायांविन्यस्यप्राणप्रतिष्ठांकुर्यात् यथा अस्यश्री

प्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुरुद्रा ऋषयः ऋग्यजुःसामानिछंदांसि क्रियामयवपुः प्राणाख्यादेवता आंबीजं क्रौं शक्तिः प्राणप्रतिष्ठापनेवि
नियोगः ब्रह्मविष्णुरुद्रऋषिभ्योनमः शिरसि ऋग्यजुःसामछंदोभ्योनमः मुखे प्राणाख्यदेवतायैनमः हृदि आंबीजायनमः गुह्ये क्रौंशक्त्येनमः पादयोः
ॐ कं खं गं घं ङं अं पृथिव्यप्तेजोवाय्वाकाशात्मने आं हृदयाय नमः ॐ चं छं जं झं ञं इं शब्दस्पर्शरूपरसगंधात्मने ई शिरसेस्वाहा ॐ टं ठं डं
ढं णं उं श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं शिखायैवषट् ॐ तं थं दं धं नं एं वाक्पाणिपादपायूपस्थात्मने ऐं कवचायहुं ॐ पं फं बं भं
मं ॐ वचनादानविहरणोत्सर्गानंदात्मने ॐ नेत्रत्रयायवौषट् ॐ यं रं लं वं शं षं सं हं ळं क्षं अं मनोबुद्ध्यहंकारचित्तात्मने अः अस्त्राय
फट् एवमात्मनिदेवेचकृत्वादेवंस्पृष्ट्वाजपेत् ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः देवस्य प्राणाइहप्राणाः ॐ आं ह्रीं हंसः देवस्यजीवइ
हस्थितः ॐ आं ह्रीं हंसः देवस्यसर्वेंद्रियाणि ॐ आं ह्रीं देवस्यवाङ्मनस्त्वक्चक्षुःश्रोत्रघ्राणप्राणाइहागत्यस्वस्तयेसुखेनसुचि
रंतिष्ठंतुस्वाहा अर्चात्हृदयंगत्वादत्वाजपेत् अस्यैप्राणाः प्रतिष्ठंतु अस्यैप्राणाःक्षरंतुच अस्यैदेवत्वमर्चायैमामहेतिचकश्चनप्रणवेन
सन्निरुध्यसजीवंध्यात्वाध्रुवाद्यौरितित्र्यृचंजप्त्वाकर्णेगायत्रींदेवमंत्रंचजप्त्वापुरुषसूक्तेनोपस्थायपादनाभिशिरःस्पृष्ट्वा इहैवैधीति
त्रिर्जपेत् ततःकर्तास्वागतंदेवदेवेशमद्भाग्यात्त्वमिहागतः प्राकृतंत्वमदृष्ट्वामांबालवत्परिपालय धर्मार्थकामसिद्ध्यर्थंस्थिरोभवशि-
वायनः सान्निध्यंतुतदादेवस्वार्चायांपरिकल्पय यावच्चाद्रावनीसूर्यास्तिष्ठंत्यप्रतियातिनः तावत्त्वयात्रदेवेशस्थेयंभक्तानुकंपया भगव

ध.सि. ॥ मृदंघदेवेशत्वंपितासर्वदेवहिनां येनरूपेणभगवन्त्वयाव्याप्तंचराचरं तेनरूपेणदेवेशस्मार्चायांसन्निधोभवेतिनमेत् अथाचार्यःकनीयां ॥ कृ.प.
२०८ ॥ लिंगमर्चायाम्भूः पुरुषमावाहयामि भुवः पुरुषमा० स्वः पुरुष० भूर्भुवःस्वःपुरु० इत्यावाह्यप्रणवेनासनंदत्वादृक्षेश्यामाकविष्णुक्रां
तपद्मामिश्रंपाद्यं ॐ इमा आपःशिवतमाः पूततमामेध्यामेध्यतमा अमृता अमृतरसाः पाद्यास्ता जुषतांप्रतिगृह्यतांप्रतिगृण्हातुभगवा
नब्रह्माविष्णुर्विष्णवेनमइतिपाद्यंभगवान्महादेवोरुद्रायनमइतिलिंगे एवंदेवतांतरेप्यूह्यं इमा आपःशिवतमा० आचमनीयास्तेजुषतांप्रति
गृह्य० इमाआ० अर्घ्यास्तेइत्यर्घ्यंपंचामृतस्नानं देवमंत्रैः संस्नाप्य इदंविष्णुरितिविष्णोनमो अस्तुनीलग्रीवायेतिलिंगेकंकणोविसृज्यव
स्त्रंयज्ञोपवीतंचदत्वाइमेगंधाःशुभादिव्याः सर्वगंधैरलंकृताः पूताब्रह्मपवित्रेणपूताःसूर्यस्यरश्मिभिः पूताइत्यादिपूर्ववदितिगंधं इमे
माल्याःशुभादिव्याःसर्वमाल्यैरलंकृताः पूताइत्यादि इतिमालाः इमेपुष्पाइतिपुष्पं वनस्पतिरसोधूपो० धूपोयंप्रतिगृह्यतांप्रतिगृण्हातु
भगवानित्यादि ज्योतिःशुभ्रंचतेजश्चदेवानांसततंप्रियं प्रभाकरः सर्वभूतानांदीपो० तां प्रतिगृण्हातुभगवानितिदीपंदत्वा विष्णोःसंकर्ष
णादिद्वादशनामभिः पुष्पाणिसमर्प्य तैरेवतर्पणंकृत्वापायसगुडोदनचित्रोदनानिपवित्रेलवितत मितिनिवेद्यसंकर्षणादिनामभिर्द्वाद
शगृहसिद्धान्नकृसराहुतीर्हुत्वाकृसरेणैवशां डि०णे० श्रियै० सरस्वत्यै० विष्णवे० इतिहुत्वा विष्णोर्नुकं० तदस्यप्रि० प्रतद्विष्णु० परोमात्र
विचक्र० चिर्दे वः० इतिपणमंत्रैर्जुहुयात् लिंगेतुदीपांतंकृत्वाभवायदेवाय० शर्वायदेवाय० ईशानायदे० पशुपतयेदे० रुद्रायदे० उ ॥ २०८

उग्रायदे० भीमायदे० महतेदेवायनमइतिपुष्पाणिदत्वानैरेवतर्पणंकृत्वापविर्त्रअंतेइतिपायसंगुडोदनंचनिवेद्य भवायदेवायस्वाहेत्याद्यष्टभिः
कृसरंजुहुयात् तिलमिश्रोदनः कृसरः भवस्यदेवस्यपत्न्यैस्वाहेत्याद्यष्टभिर्गुडोदनंहुत्वा भवस्यदेवस्यसुतायस्वाहेत्याद्यष्टभिर्हरि
द्रोहनंहुत्वात्र्यंबकं० मानोमहां० मानस्तो० आराद्ते० विकिरि० सहस्राणिसह० इतिद्वादश एतैः कृसरंहुत्वा शिवाय० शंकराय० सहमाना
य० शितिकंठाय० कपर्दिने० ताम्राय० अरुणाय० अपगुरमाणाय० हिरण्यबाहु० सस्पिंजराय० बभ्लुशाय० हिरण्यायेतिद्वादशनाम
भिर्जुहुयात् स्विष्टकृदादिहोमशेषंसमाप्यपूर्वोक्तस वेद्यांविर्भिविष्णवे लिंगायवाबलिंदद्यात् मंत्रस्तु त्वामेकमाद्यंपुरुषंपुरातनंनारायणं
विश्वसृजंयजामहे त्वमेवयज्ञोविहितोविधेयस्त्वमात्मनात्मन्प्रतिगृण्हीष्वहव्यं लिंगेतुनारायणपदेरुद्रशिवमितिवदेत् अश्वत्थपर्णे
भूर्भुवःस्वरोमितिहुतशेषंनिधायप्रदक्षिणीकृत्य विश्वभुजेसर्वभुजे आत्मनेपरमात्मनेनमइतिनत्वाचार्याय द्वादशतिस्रएकांवागांद
त्वाऋत्विग्भ्योदक्षिणांदत्वाशतंद्वादशवाविप्रान्भोजयेदिति मासादेर्नूतनेजलाशयोक्तप्रतिष्ठाविधिःकार्यः तत्रगोरुत्तारणपात्रीप्र
क्षेपादिनकुर्यात् वारुणहोमस्थानेवास्तुहोमः इतिस्थिरार्चाचलार्चयोः प्रतिष्ठाप्रयोगः अथातोपिसंक्षिप्तएकाध्वरविधानेनचलप्रति
ष्ठाप्रयोगः संकल्पादिनांदीश्राद्धांतंप्राग्वत् एकमाचार्यंवृणुयात् आचार्योमुकदेवप्रतिष्ठाकर्मकरिष्येइत्यादिसर्षपविकिरणांतं सर्वतो
भद्रमंडलेप्राग्वत्तामभिर्ब्रह्मादिमंडलदेवता आवाह्यसंपूज्ययथागृह्यमग्निंप्रतिष्ठाप्यान्वादध्यात् आज्यभागांतेस्थाप्यदेवतांसहस्रा

मध्योत्तरघृतेवासमिदाज्यचरुतिलद्रव्यैर्ब्रह्मादिमंडलदेवताः प्रत्येकंदशदशतिलाज्याहुतिभिः शेषेणेत्यादि तूष्णींनिर्वापप्रोक्षणे आ
ज्यभागांते तडागनदीतीरेगोष्ठचत्वरपर्वतगजाश्वह्रदवल्मीकसंगमेतिदशमृद्भिरष्टवारंदेवंसंस्नाप्यपंचगव्यैःक्रमेणस्नापयित्वादूर्वासि
द्धार्थपल्लवोपेतैरष्टकलशैरापोहिष्ठादिमंत्रैरभिषिच्याग्न्युत्तारणंकुर्यात् सर्वतोभद्रस्थपीठेदेवमुपवेश्यनाम्नावस्त्रगंधधूपादिदत्वाष्ट
दिक्षुपल्लवादिफतोदकुंभानष्टौदीपांश्चसंस्थाप्यप्राग्वन्नेत्रोन्मीलनंचित्रान्नेनबलिंदत्वापुरुषसूक्तेनस्तवोक्तद्रव्यचतुष्टयंसंस्थाप्य
देवमंत्रेणहुत्वाएकैकद्रव्यहोमांतेदेवंस्पृशेत् आज्यहोमेकुंभेपातान्क्षिपेत् मंडलदेवताभ्योहुत्वाहोमशेषंसमाप्यपूर्णाहुतिंकु-
र्यात् ततः पूर्वोक्तरीत्यासूक्तन्यासावाहनप्राणप्रतिष्ठांतंकृत्वाइहैवैधीतितृचंपुरुषसूक्तंचजप्त्वामूलमंत्रादिनावाहनादिपंचामृत
स्नानांतेसंपातोदकैरिमाआपःशिवतमाइत्यादिनाभिषेकः वस्त्रादिनैवेद्यांतंप्राग्वत् तांबूलफलदक्षिणानीराजननमः प्रदक्षिणादि
विधायपुष्पांजलिंदत्वासाचार्यःकर्तादेवंनत्वासमाप्याचार्यायदक्षिणांतेष्टकुंभोदकैर्यजमानाभिषेकः विष्णुंस्मृत्वाकर्मेश्वरेर्पयेदिति
संक्षेपः अथपुनःप्रतिष्ठा मद्यचांडालस्पृष्टावन्हिदग्धाविप्ररक्तदूषितापापिस्पृष्टाचप्रतिमापुनःसंस्कार्याखंडितेस्फुटितेस्या नष्टं
शेपूजनाभावेश्वगर्दभादिस्पर्शेपतितरजस्वलाचोरैःस्पर्शेचपुनःप्रतिष्ठा खंडितांभग्नांविधिनोद्धृत्यान्यांस्थाप्य अर्चायाभंगचौर्यादौत
द्दिनेउपवासः ताम्रादिधातुमूर्तीनांचोरचांडालादिस्पर्शेताम्रादिधातूक्तशुद्धिंकृत्वापुनःप्रतिष्ठा पूर्वंप्रतिष्ठितस्याशुद्धिपूर्वकमेकसत्र

मेकमासं द्विमासंवार्चनादिविच्छेदेशूद्ररजस्वलाधपस्पर्शेनेवाजलाधिवासंकृत्वाकलशेनस्नपयेत् ततः पंचगव्येनस्नपयित्वाष्टसहस्रमष्टशतमष्टाविंशतिसंख्यंवाकलशैः शुद्धोदकेनपुरुषसूक्तेनस्नपयेत् गंधपुष्पादिनापूजयित्वागुडोदनंनिवेदयेदितिशुद्धिः बुद्धिपूर्वेपूजनविच्छेदेशूद्रस्पर्शादौपुनः प्रतिष्ठैवशुद्धिः अन्येतु॥ ॥एकाहपूजाविहतौकुर्याद्द्विगुणमर्चनं द्विरात्रेतुमहापूजांसंप्रोक्षणमतः परं मासादूर्ध्वंपूजाविहतौपुनः प्रतिष्ठाप्रोक्षणविधिर्वाकार्यइत्याहुः पुनः प्रतिष्ठादिमलमासशुक्रास्तादावपिकार्यं देवालयवापीकूपतडागभेदने आरामसेतुसभाभंगेइदंविष्णुकर्मानस्तोकेविष्णोः कर्माणिपादोस्येतिचतस्र आज्याहुतीर्हुत्वाब्राम्हणान्भोजयेदिति अथप्रोक्षणविधिः देवमुद्धास्यपंचवारंमृज्जलैः प्रक्षाल्यपंचगव्यैःस्नापयित्वाकुशोदकैर्विशोध्यमूलेनाष्टोत्तरशतवारंप्रोक्ष्यमूलेनमूर्धादिपीठांतंसंस्पृश्यतत्त्वन्यासलिपिन्यासमंत्रन्यासपूर्वकंप्राणप्रतिष्ठांकृत्वामहापूजांकुर्यात् पूजाहीनादिष्वप्येषसंप्रोक्षणविधिः स्मृतः अथजीर्णोद्धारः सचलिंगादौभग्नेदग्धेवाकार्यः अयंचानादिसिद्धप्रतिष्ठितलिंगादौभंगादिदोषेपिनकार्यः तत्रतुमहाभिषेकः कार्यः कर्ताऽमुकदेवस्यजीर्णोद्धारंकरिष्येइत्युक्त्वानांदीश्राद्धांतंकृत्वाचार्यंवृत्वापीठेमंडलदेवता आवाह्यलिंगेव्यापकेश्वरहृदयायनमः ॐ व्यापकेश्वरशिरसेस्वाहेत्यादिषडंगंकृत्वादेवतांतरेमूलमंत्रेणषडंगंकृत्वार्चयेत् अघोरेतिमंत्रमष्टोत्तरशतंजप्त्वाग्निंप्रतिष्ठाप्य अघोरेणघृताक्तसर्षपैःसहस्रंहुत्वेंद्रादिभ्योनाम्नाबलिंदत्वाजीर्णदेवंप्रणवेनसंपूज्यसाज्यतिलैर्मंडलदेवताहोमंकृत्वाप्रार्थयेत् जीर्णंभग्नमिदंदेवसर्वदो

षावहंन्नृणां अस्योद्धारेकृतेशांतिः शास्त्रेस्मिन्कथितात्वया जीर्णोधाविधानंचनृपराष्ट्रहितावहं तदधिष्ठायमांदेवप्रहरामितवाज्ञया
किराज्यमधूदूर्वासमिद्भिर्देवमंत्रेणाष्टोत्तरशतंहुत्वातिलैः सहस्रंहुत्वापायसेनशतंहुत्वालिंगंप्रार्थयेत् लिंगरूपंसमागत्ययेनेदंसमधि
ष्ठितंपायास्वंसंमितंस्थानंसत्यज्यैवशिवाज्ञया अत्रस्थानेचयाविद्यासर्वविद्येश्वरैर्युता शिवेन सहसंतिष्ठतिमंत्रितजलेभिषिच्यविसर्ज—
येत् अस्त्रमंत्रितेनखनित्रेणखात्वालिंगमादायवामदेवमंत्रेणनद्यादौक्षिपेत् मूर्तिमर्णवेनाक्षिपेत् दारुजंहंमधुनाभ्यज्याघोरेणदहेत्
हेमादिमयंयोग्यंकृत्वातत्रैवस्थापयेत् ततःशांत्यर्थम घोरेणाघृतक्षीरमध्वाक्तैस्तिलैः सहस्रंहुत्वाप्रार्थयेत् भगवन्भूतभव्येशलोकनाथ
जगत्पते जीर्णलिंगसमुद्धारः कृतस्तवाज्ञयामया अग्निनादारुजंदग्धंक्षिप्तंशैलादिकंजले प्रायश्चित्तायदेवेशअघोरास्त्रेणतर्पितं
ज्ञानतोज्ञानतोवापियथोक्तंनकृतंयदि तत्सर्वंपूर्णमेवास्तुत्वत्प्रसादान्महेश्वर अथयजमानः प्रार्थयेत् गोविप्रशिल्पिभूपानामा
चार्यस्यचयज्वनः शांतिर्भवतुदेवेशअच्छिद्रं जायतामिदं मूर्तौतुविशेषः॥ त्वत्प्रसादेननिर्विघ्नंदेहंनिर्मापयेत्पसौ वास्तुंकुरुकरश्रेष्ठताव
त्वंचाल्पकेगृहे वसक्लेशंप्रहित्वेह मूर्तिर्विततवपूर्ववत् यावत्कारयतेभक्तः कुरुतस्यचवांछितं ततोनवांमूर्तिंलिंगंवाकृत्वोक्तविधिना
प्रतिष्ठाकालानपेक्षयाप्रासादेवाकुस्थापयेत् इतिजीर्णोद्धारः प्रतिमाशिवलिंगप्रासादकलशादिभंगेस्वामिनोमरणंभवेत्॥ तत्रशांतिः
कुंडंकृत्वाविधानेनततोहोमंसमाचरेत् चरुंचयमदेवस्यसाधयित्वाविधानतः दधिक्षौद्रघृताक्तानामश्वत्थसमिधांततः॥ जुहुयादष्ट

माऽऽइमारुद्रेतिमंत्रवित् मांषैर्मुद्रैस्तिलैश्चैव घृतेनमधुनापिच एभिः पंचसहस्राणिशक्तिबीजेन होमयेत् शक्तिबीजंच्छ्रींबीजं सूमिंघे-
र्मुमनश्वाहस्वर्णधान्यंसदक्षिणंदत्वायपंचगव्येनस्ना यादेवालयेद्विजः बलिंदद्याद्यमायाथकृसरैः पायसैस्तथाईशानायबलिंदत्वाकृ
तकृत्योभवेन्नरः अभ्रसूलकमलाकरे अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जंतुवर्जितैः आत्मारामोद्भवैर्वापि भक्त्यासंपूजयेत्सुरान् स्कं-
धैर्दलपन्नानिशीर्णपर्युषितानिच स्वयंपतितपुष्पाणिमलाद्युपहृतानिच मुकुलैर्नार्चयेद्देवमपक्वैः कृमिसुक्फलैः पुष्पाभावेपत्र
पूजापत्राभावेफलैरपि निवेदयेत्सकलाभेतृणगुल्मौषधीरपि समित्पुष्पकुशादीनिब्राह्मणः स्वयमाहरेत् शूद्रानीतैः क्रयक्रीतैः
कर्मकुर्वन्पतत्यधः उक्तपुष्पार्चनेक्रयक्रीतैरपि केचिद्धर्मार्जितधनक्रीतैर्यः कुर्यात्केशवार्चनं नपर्युषितदोषोस्तिमालाकारगृहेषुचे
त्यादुक्तेमालाकारनीतैः क्रयक्रीतैरपिपुष्पपत्रैः पूजयंतिनित्यपूजार्थं परोपवनादेरपिपुष्पादिग्रहेचौर्यदोषोन पूजार्थेपुष्पादिनया
चेत्समित्पुष्पकुशादीनिवहंतंनाभिवादयेत् तद्धारीचैवनान्यान्हि निर्माल्यंतद्भवेत्तयोः देवोपरिधृते वामहस्तेधोवस्त्रेचधृतंजलेन
क्षालितंचपुष्पंनिर्माल्यंवर्ज्यंपर्युषितंपुष्पंवर्ज्यंपर्युषितंजलंनवर्ज्यंतुलसीपत्रंनवर्ज्यंतीर्थजंजलं महरतिष्ठतेजातीकरवीरमहर्नि
शं नैवपर्युषितंपद्मंतुलसीबिल्वपत्रकं कुंदंचदमनंचैवागस्त्यंचकलिकातथा बिल्वादेरपर्युषितत्वादिनसंख्या बिल्वः ३० अपा
मार्गः ३ जाती १ तुलसी ६ शमी ६ शतावरी ११ केतकी ४ भृंगराजः ९ दूर्वा ८ मंदारः १ पद्मं १ नागकेसरः २ दर्भाः ३० मरुवकः ३ नि-

ल:१ तगर: ६ पालाशं ६ कल्हारं ११ मल्लिका ४ चंपकः९ करवीरं ८ कुंभी १ दमनं १ मरुबक २ एतेषामेतद्दिनोत्तरं पर्युषितत्वं तुलसी
ग्रहणकाल: वैधृतौच व्यतीपाते भौमभार्गवभानुषु पर्वद्वयेच संक्रांतौ द्वादश्यां सूतकद्वये तुलसीं येविचिन्वंति तेछिंदंतिहरे: शिर: नैव
च्छिंद्याद्रवौ दूर्वां तुलसीं निशिसंध्ययो: धात्रीपत्रं कार्तिकेच पुण्यार्थी मतिमान्नर: द्वादश्यां चदिवास्वापस्तुलस्यावचयस्तथा विष्णोश्चै
वदिवास्नानं वर्जनीयं सदाबुधै: अत्रदिवानिषेधाद्रात्रौ स्नानादिषोडशोपचारै: पूजाकार्या दिवातु गंधपुष्पांजल्यंता एवोपचारा इ-
ति कमलाकराह्निके विष्णोर्द्वादश्यां निर्माल्योपनयनमपिनकार्यमिति तंत्रांतरे स्मर्यते एतदपवाद: पुरुषार्थचिंतामणौ नारदीये
पंचामृतेन संस्नाप्य एकादश्यां जनार्दनं द्वादश्यां पयसा स्नाप्य हरिसायुज्यमश्नुते इति देवार्थे तुलसीछेदो होमार्थे समिधां तथा इंदु
क्षयेन दुष्येत गवार्थे तु तृणस्य च तुलसीग्रहणमंत्र: तुलस्यमृतनामासि सदा त्वं केशवप्रिये केशवार्थं विचिन्वामि वरदा भव शोभने
जातिमल्लिका करवीराशोकोत्पलचंपक बकुल बिल्वशमीकुशा एतानी सर्वदेवानां विहितानी अथ विहितप्रतिषिद्धत्वाद्वैकल्पिकानि
पाटलाशमीपत्रं च दुर्गायाः कुंदपलाश बकुल दूर्वा: शिवस्य कुसुदतगरे सूर्यस्य तुलसी भृंगराजतमालपत्राणि शिवदुर्गयो: अग
स्तीमाधवीलता लोध्रपुष्पं विष्णुशिवयो: धत्तूरमंदारौ विष्णुसूर्ययो: इतिविकल्पितानि अथ विष्णो: प्रियाणि मालतीजातीकेत १११
कीमल्लिकाशोक चंपक पुन्नाग बकुलोत्पल कुंद करवीर पाटला तगर पुष्पाणि अन्यानि च सुरभीणि विष्णो: प्रियाणि अपामार्गभृं

गराजखदिरशमीदूर्वांकुरामदमंकबिल्वतुलसीपत्राण्युत्तरोत्तराधिकप्रियाणि तुलसीसर्वाधिकाजातिपुष्पसहस्रेणमालार्पणेक
ल्पकोटिसहस्रंविष्णुपुरेवासः आम्रमंजर्यापूजनेगोकोटिदानफलं अथशिवस्यचतुर्णांपुष्पजातीनांगंधमाघ्रातिशंकरः अर्क
स्यकरवीरस्यबिल्वस्यबकुलस्यच दशसुवर्णदानफलंश्वेतार्कपुष्पं ततः सहस्रगुणंबकुलंपुष्पं एवंधत्तूरशमीपुष्पद्रोणपु
ष्पनीलोत्पलानामुत्तरोत्तराणांसहस्रगुणत्वम् मणिमुक्ताप्रवालैरुक्तरत्नैरप्यर्चनंकृतं नगृण्हामिविनादेविबिल्वपत्रैर्वरानने
सर्वकामप्रदंबिल्वंदारिद्र्यस्यविनाशनं नीलोत्पलसहस्रेणमालार्पणेकल्पकोटिसहस्रंशिवपुरेवासः धत्तूरैर्बृहतीपुष्पैश्चपूज
नेगोलक्षफलं पाटलामंदारापामार्गजातीचंपकोशीरतगरनागकेसरपुन्नागजपामल्लिसहकारकुसुमप्रपुष्पाणिशिवप्रियाणि
धत्तूराणिकदंबानिरात्रौदेयानिशंकरे मदनरत्नेकेतकाभिकदंबीनीतिपाठः अभावेपुष्पपत्राणामन्नाद्येनाभिपूजयेत् शालि
तंडुलगोधूमयवैर्वापिसमाचरेत् अथनिषिद्धानि बंधूककुंदानिमुक्तकेतकीकपित्थबकुलशिरीषनिंबानि पुष्पपात्रादिकंत्यक्त्वा
भिर्गुरुवमुत्तानमर्पयेत् पत्रंपुष्पंफलंचैवयथोत्पन्नंतथार्पयेदितिवचनात् बिल्वपत्रंतुस्वाभिमुखाग्रन्युब्जमर्पयेत्
पक्वाम्रफलस्यशिवार्पणेवर्षायुतंशिवपुरेवासः सव्यंव्रजेत्ततोसव्यंप्रणालींनैवलंघयेदित्यादिस्थिरलिंगेप्रदक्षिणाप्रकारः
चरेत्तुसव्येनैवदेव्याश्चअपिबकुलकुंदादिसहितान्येवप्रियाणि धान्यानांसर्वपत्रैश्चपुष्पैर्देवींप्रपूजयेत दूर्वांकुरैःसिंधुवारे-

बंधुकागस्तिसंभवैःबिल्वपत्रैःपूजनेराजसूयफलंकरवीरस्रजाग्निष्टोमस्य बकुलस्रजावाजपेयस्य द्रोणस्रजाराजसूयस्येति
एवंसूर्यबिंबेगादेरपिमाघोविष्णुवत्ज्ञेयानि अथशिवनिर्माल्यग्रहणविचारः अग्राह्यंशिवनैवेद्यंपत्रंपुष्पंफलंजलं शालग्रामशि-
लासंगात्सर्वंयातिपवित्रतां शैवसौरनैवेद्यभक्षणेचांद्रायणम् अभ्यासेद्विगुणंमत्याभ्यासेसांतपनं अन्यनिर्माल्येप्यनापद्येवं इ-
दंचज्योतिर्लिंगस्वयंभूलिंगसिद्धप्रतिष्ठापितलिंगातिरिक्तस्थावरलिंगविषयम्॥ज्योतिर्लिंगादौतुपूजकेनदत्तंफलतीर्थादिकं
भक्त्याशक्त्यंग्राह्यंनलोभेन पंचायतनस्थितलिंगेषुचरेषुप्रतिमासुचान्नादेरपिस्वयंग्रहणेपिनदोषःज्योतिर्लिंगाद्यन्यस्थिर-
लिंगेषुतीर्थोदकचंदनमात्रंग्राह्यंबाह्यैःशिवोपासकैरेवभक्ष्यं ज्योतिर्लिंगादौपूजकदत्तमन्नमपिभक्ष्यमितिकेचित् त्र्युत्तरारोहिणी
ध्रुवं मघाभरणीपूर्वात्रयंक्रूरं श्रवणत्रयपुनर्वसुस्वात्यश्चरं अश्विनीहस्तपुष्यंक्षिप्रं अनुराधारेवतीमृगचित्रंमृदु कृत्तिकाविशा-
खेमिश्रंमूलाश्लेषाज्येष्ठार्द्रास्तीक्ष्णं इतिनक्षत्रसंज्ञाः यत्रनोक्तातिथिस्तत्रग्राह्यारिक्तामभाविना वारोपियत्रनप्रोक्तस्तत्रार्कार्किकु-
जान्विताः चरमृदुक्षिप्रध्रुवमूलविशाखामघास्वसकुजेष्टशनिवारे भूकर्षणंहितं सूर्यत्यक्तनक्षत्रात्त्र्यष्ट नवाष्टस्वराःशुभमशुभमपितिहल-
चक्रं अत्रैवनक्षत्रेशनिभौमभिन्नवारेबीजवापः सस्यारोपणंच धान्यच्छेदश्चसीरवृक्षजन्यः खलमध्यस्तंभः धान्यानांमर्दनंज्येष्ठा
मूलमघाश्रवणरेवतीरोहिण्यनुराधाफल्गुनीद्वयेशुभम् धान्यसंग्रहः क्षिप्रध्रुवचरमृदुमूलेषुज्ञगुरुशुक्रेषुचरभिन्नलग्नेशुभः ११२

ॐ धनदायसर्वलोकहितायदेहिमेधान्यंस्वाहेतिमंत्रंलिखित्वाधान्यागारेक्षिपेत् तेनधान्यवृद्धिः बुधमंददिनेनैवधनधान्यव्ययःकार्यः
अधान्नवान्नसह्यारेमृदुक्षिप्रचरेदिवा अथवस्त्रादि वस्त्रविभूषणविधिर्ध्रुवाश्विनीहस्तपंचकपुनर्वसुद्वये पौष्णवासवमघोभ्य
सत्तिथौ मंदभौमशशिवासरान्विना अनुक्तेपी एदंवस्त्रंविभाज्ञोत्सवलब्धिषु ध्रुवपुष्यादितोयोषिद्भुंजेयावस्त्रभूषणे भभाभोति
पतिभीतिस्नातिवारुणभेवया पादुकासनशय्यादेर्भोगः सत्तिथिवासरे ध्रुवक्षिप्रमृदुश्रोत्रभरणीषुपुनर्वसौचेन्नव्यवस्त्रंमध्यां
शेदग्धस्फुटितपंकिलं तत्त्यजेच्छांतिकंकुर्यात्त्यजेदेवांत्यभागयोः विज्ञेयमेतच्छय्यायामास्तृतोपादुकास्वपि सूचीकर्मानुराधा
श्विनित्रामृगपुनर्वसौ वस्त्रप्रक्षाल्यंधारणोक्तेकालेबुधदिनंविना भोजनंभोजनेरौप्यस्वर्णकांस्यादिनिर्मितेकुर्यादमृतयोगेपुष्वर-
क्षिप्रमृदुध्रुवैःस्याद्भूषणानांघटनंचरक्षिप्रमृदुध्रुवैः शुभवारेरत्नवतांमिश्रभेपिरवौकुजे ॥ इतिवस्त्रादिविचारः ॥ शस्त्राणांघ
टनंक्रूरमिश्राश्विमृगतीक्ष्णभेशस्त्रंधार्यंध्रुवक्षिप्रमृदुज्येष्ठाविशाखके सेवाकार्याक्षिप्रमैत्रध्रुवेज्ञेज्यार्कभार्गवे मंदेपिचेत्सेवकर्क्षे
स्वामिन्नद्वितीयकं हस्तषट्कध्रुवश्रोत्ररेवतीपुष्यभेशुभं पुनर्वसौचशिबिकागजाश्वादिषुरोहणं राज्ञांविलोकनंक्षिप्रश्रुतिद्वयमृ
दुध्रुवेनित्यारंभःपुष्यध्रुवेमृगज्येष्ठाधनिष्ठयोः अनुराधाशतभिषक्धस्तेस्याच्छुभवासरे विपणिःस्यान्मृदुक्षिप्रध्रुवैरिन्नाकुजान्वि-
ना क्रयःकार्योश्विनीस्वातीश्रवश्चित्राशतांत्यभेविक्रयोभरणीपूर्वात्रयाश्लेषाकृमिश्रभे संतुबंधोध्रुवेस्वात्यांजीवार्कशनिवासरे ना-

नापशुक्रियाहस्तपुष्यार्द्रामृगमिश्रभे पुनर्वसौधनिष्ठाश्विपूर्वाज्येष्ठाशतातांत्यभेत्यक्तार्कभौमेंदुशनीन्यक्तातिचित्राध्रुवाणिचअ-
मारिक्ताष्टमीश्चापिगाति क्रयमुखाः शुभाः* दीप पशुगमनंपशुक्रयादिकमित्यर्थः* द्रव्यंलघुचरैर्योज्यंवृश्चिकर्थेवरलग्नके
ऋणंभौमेनगृण्हीयाहृद्धियोगकेसंक्रमे धनिष्ठापंचकेहस्तेत्रिपुष्करद्विपुष्करेभौमादिषुऋणच्छेदंकुर्याच्चधनसंग्रहंबुधेधनं-
नमदेयंसंग्रहस्तकंबुधेशुभः शन्यर्कारैस्त्रिपादर्क्षैर्भद्रातिथ्यास्त्रिपुष्करः मृगाचित्राधनिष्ठासुतत्तिथ्यान्हिद्विपुष्करः शुभाशुभेषुत्रिगुणं
द्विगुणंचफलंक्रमात् मिश्रक्रूरेषुतीक्ष्णेषुस्वात्यांद्रव्यंनलभ्यते दत्तंप्रयुक्तंनिक्षिप्तंनष्टंचेत्याहनारदः अंधमंदचिपिटसुलोचना
भितिक्रमात् गणनीयरोहिणीभादंधेनष्टंलभेद्द्रुतं मंदेयत्नाल्लभेत्तच्चिपिटस्वक्ष्योर्नहि अन्विष्यपूर्वतोधेषुमंदसंज्ञेषुदक्षिणेप्र
तीच्यांचिपिटाख्येषुसुलोचनउदग्दिशि राजाभिषेकः श्रवणेध्रुवर्क्षेज्येष्ठामृदुक्षिप्रउदग्रवीर्यःस्यात् त्यक्तारिक्ताधिकचैत्ररात्री
श्चंद्रेज्यशुक्रास्त्युदयेशुभाथजलाशयानांखननमघापुष्यध्रुवेमृगे पूर्वाषाढानुराधांत्यधनिष्ठाश्वात हस्तभेजलराशिगतेचंद्रेल
ग्नस्थेचबुधेगुरौसौरेचोलोक्तनक्षत्रवारादिषुशुभंजगुः पंचमेपंचमेराज्ञादिनेन्येषांयदृच्छया स्मश्रुकर्मभवेन्नैवनवमेदिवसे
क्वचित् क्षौरेभृतेरतदर्शेवर्जयेच्चाजिजीविषुः क्षौरंनकुर्युरभ्यक्तभुक्तस्नातविभूषिताः प्रयाणसमरारंभेनरात्रौनचसंध्ययोः
श्राद्धाहेप्रतिपद्रिक्ताव्रतान्हिवनवैधृतौ मघास्तंजन्मनक्षत्रेसर्वकर्मसुकीर्तितं क्षौरंप्रयाणभैषज्यंविवादेषुनशोभनं षष्ठ्य

मापूर्णिमा पात्तचतुर्दश्यष्टमी तथा आसन्नसंनिहितं पापं तैलेषु स्त्रीभगे क्षुरे राजकार्ये नियुक्तानां नराणां भूपजीविनां श्मश्रु लोमनखच्छेदे नास्ति कालविशोधनं क्षौरनैमित्तिककार्यनिषेधे सत्यपि ध्रुवं यज्ञे मृतौ बंधमोक्षे नृपविप्राज्ञयापि च भार्गवयस्त्रैः सपित्रकै नेकार्यं मंडनं सदा मंडनस्य निषेधोपि कर्तनं तु विधीयते उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत्सुधीः केशश्मश्रुलोम नखान्युदक्संस्थानि वापयेत् आनर्त्तो हि छत्रः पाटलिपुत्रो दितिर्दितिः श्रीशः क्षौरेषु मरणादेषां दोषा नश्यंति निःशेषाः अथ गोत्पत्तौ नक्षत्रफलं अश्विन्यां रोगोत्पत्तावेकाह नवदिनानि वा पंचविंशति दिनानि वा पीडा भरण्यामेकादशैकविंशतिर्वा मासं वा मृत्युर्वा २ कृत्तिकायां दशनवैकविंशतिर्वा ३ रोहिण्यां दश वा नव वा सप्त वा त्रीणि वाहानि ४ मृगे पंच नव वा त्रिंशद्वा ५ आर्द्रायां मृत्युर्वा दशाहं वा मासं वा ६ पुनर्वसौ सप्त नव वा मृत्युर्वा ७ पुष्ये सप्त वा मृत्युर्वा ८ आश्लेषायां मृत्युर्विंशतिस्त्रिंशद्वा नव वा दिनानि पीडा ९ मघायां मृत्युर्वा सार्धमासं वा विंशति दिनानि वा पीडा १० पूर्वाफाल्गुन्यां मृत्युर्वाब्दं मासं वा पीडा पंचदश वा षष्टिर्वा दिनानि ११ उत्तरायां सप्तविंशतिः पंचदश सप्त वा दिनानि १२ हस्ते मृत्युरष्ट वा नव वा सप्त वा पंचदश वाहानि १३ चित्रायां पक्षमष्ट वा दश वैकादश वाहानि १४ स्वात्यां मृत्युर्वैकद्वित्रिचतुःपंचमासैर्वा दशदिनैर्वा रोगनाशः १५ विशाखायां मासं वा पक्षं वाष्ट दिनं विंशति दिनानि वा पीडा १६ अनुराधायां दशरात्रमष्टाविंशति रात्रं वा ज्येष्ठायां मृत्युर्वा पक्षं वा मासं वैकविंशति रात्रं वा पीडा १८ मू-

ध॰सिं ४८ लेमृत्युः पक्षंनवरात्रींविंशतिरात्रंवापीडा १९ पूर्वाषाढायांमृत्युर्वाद्वित्रिषडादिमासैर्विंशतिदिनैः पक्षेणवारोगनाशः २० उत्तराषाढा- तृ॰प॰
यांसार्धमासंविंशतिरात्रंवामासंवा २१ श्रवणेपंचविंशतिर्दशैकादशेवाषष्टिर्वाहानि २२ धनिष्ठायांदशरात्रंपक्षंमासंत्रयोदशरात्रं
वा २३ शततारकायांद्वादशाष्टैकादशवा २४ पूर्वाभाद्रपदायांमृत्युर्वाद्वित्र्यादिमासंवादशरात्रंवा २५ उत्तराभाद्रपदायांसार्धमासंप-
क्षंसप्ताहंदशाहंवा २६ रेवत्यांज्वराद्युत्पत्तौदशाहमष्टाविंशतिरात्रंवापीडा २७ जन्मनक्षत्रेजन्मराशावष्टमचंद्रेचरोगोत्पत्तौमृत्युः
२८ अर्कादिवारेक्रमेणमघाद्वादश्यौविशाखेकादश्यौपंचम्यार्द्रे तृतीयोत्तराषाढेशततारषष्ठ्यौ अष्टम्यश्विन्योपूर्वाषाढानवम्यौचे
तित्रयाणांयोगेमृत्युः एवमर्कादावनुराधाभरण्यौ आर्द्रोत्तराषाढेमघाशततारेविशाखाश्विन्यौज्येष्ठामृगौश्रवणाश्लेषेपूर्वाभाद्रप
दाहस्तौचेन्मृत्युयोगः अत्रोक्तास्तिथिवारनक्षत्रशांतयोविस्तृताः कार्याः येषुनक्षत्रेषुमरणमुक्तंतत्रशांतिरावश्यकी अन्यत्रकृता
कृता अथसर्वनक्षत्रसाधारणः शांतिप्रयोगः देशकालौसंकीर्त्य ममोत्पन्नव्याधेर्जीवच्छरीराविरोधेनसमूलनाशार्थममुकनक्षत्र
शांतिंकरिष्येइतिसंकल्प्यगणेशपूजादि आचार्यंवृत्वाकुंभोपरिपूर्णपात्रेद्वादशदलेनक्षत्रदेवताप्रतिमांसौवर्णींसंपूज्यद्वादशदले

पंचोर्णासूत्रवेष्टितैः सहशवंदहेत् ॥ तत्रतिथ्यादिसंकीर्त्यामुकस्यधनिष्ठापंचकादिमरणसूचितवंशारिष्टविनाशार्थंपंचकवि
धिंकरिष्य इतिसंकल्प्योक्तविधाः प्रतिमानक्षत्रमंत्रैरभिमंत्र्यगंधपुष्पैः संपूज्यदाहसमयेप्रेतोपरिन्यसेत् ॥ प्रथमांशिरसि ॥ द्वि॰
तीयांनेत्रयोः ॥ तृतीयांवामकुक्षौ ॥ चतुर्थींनाभौ ॥ पंचमींपादयोः ॥ तदुपरिनाममंत्रैर्घृताहुतीर्जुहुयात् ॥ तत्रनामानिक्रमेण
॥ प्रेतवाहः प्रेतसखाः प्रेतपः प्रेतभूमिपः प्रेतहर्त्ताचेति ॥ ततउदकंदत्वायमायसोम्यंबकमितिमंत्राभ्यांप्रत्येकंप्रतिमास्थाज्या
हुतीर्जुहुयात् ॥ ततः प्रेतमुखेपंचरत्नंदत्वापुत्तलैः सहप्रेतंदहेत् ॥ सूतकांतेतिलहोमघृतानिदत्वांकांस्यपात्रेतैलंप्रक्षिप्यत
त्रात्मप्रतिबिंबंवीक्ष्यविप्रायदद्यात् ॥ शांतिंचकुर्यात् ॥ अत्रायंविशेषः ॥ नक्षत्रांतरेमृतस्यपंचकेदाहप्राप्तौपुत्तलविधिरेवन
शांतिकं ॥ पंचकमृतस्याश्विन्यादाहप्राप्तौशांतिकमेवनपुत्तलविधिः ॥ शांतिश्चलक्षहोमरुद्रजपान्यतररूपायथाविभवंकुर्या
॥ अथवाकुंभेयमप्रतिमांसंपूज्यगृह्योक्तविधिनाग्निप्रतिष्ठापनान्वाधानादिचरुश्रपणांतंकृत्वाज्यभागांतेनामभिश्चतुर्दश
त्वर्वाहुतीर्जुहुयात् ॥ यमायस्वाहा १ धर्मराजाय॰ २ मृत्यवे॰ ३ अंतकाय॰ ४ वैवस्वताय॰ ५ कालाय॰ ६ सर्वभूतक्षयाय॰ ७ औदुंबरा
य॰ ॥ दध्नाय॰ ९ नीलाय॰ १० परमेष्ठिने॰ ११ वृकोदराय॰ १२ चित्राय॰ १३ चित्रगुप्ताय॰ १४ एवंहुत्वाहोमशेषंसमाप्य ॥ कृष्णांगांकृ-
ष्णावस्त्रांचहेमनिष्कसमन्वितां ॥ दद्याद्विप्रायशांताययमोमेप्रीयतामिति ॥ त्रिपादृक्षेप्येतदेवशांतिकं ॥ यदिभद्रातिथीनांस्था-

ज्ञालुभौमशनैश्वरैः॥ त्रिपादृक्षैश्चसंयोगस्तदायोगस्त्रिपुष्करः॥ द्विपुष्करोद्वयोर्योगेयद्वायंस्याद्विपादभैः॥ त्रिपादनक्षत्राणि
तु॥ पुनरवसूत्तराषाढाकृत्तिकोत्तरफाल्गुनी॥ पूर्वाभाद्राविशाखाचज्ञेयमेतात्त्रिपादभं॥ मृगचित्राधनिष्ठाचज्ञेयमेतद्विपाद
भं॥ त्रिपुष्करयोगेद्विपुष्करयोगेचमृतौकृच्छ्रत्रयंप्रायश्चित्तंकृत्वायवपिष्टमयपुरुषत्रयेणसहप्रेतदाहः॥ पुरुषत्रयस्यप्र
लेन्यासआज्याहुतयश्चपूर्ववत्॥ कनकहीरकनीलपद्मरागमौक्तिकेतिपंचरत्नस्यमुखेप्रक्षेपोपि॥ रत्नाभावेकर्षार्धस्वर्णं
॥ स्वर्णाभावेघृतं॥ एवंपूर्वत्रापि॥ दहनेमरणेद्वित्रिपुष्करेत्रिगुणंफलं॥ द्विगुणंखननेप्येवमेतद्दोषोपशांतये॥ सुवर्णंदक्षि
णांदद्यात्कृष्णावस्त्रमथापिवा॥ शांतिकुर्यात्सूतकांतेपूर्वोक्तांतेनमंगलं॥ मृतस्यस्मशानेनयनोत्तरंपुनर्जीवनेसतियस्य
गृहेसप्रविशातितस्यमरणंतत्रसक्षीरघृताक्तौदुंबरसमिधांसावित्र्यष्टसहस्रेणहोमः॥ अंतेकपिलादानंतिलपूर्णकांस्यपात्र
दानंच॥ एकाशीतिपलंकांस्यंतदर्धकं॥ नवषट् त्रिपलंवापिदद्याद्विप्रायशक्तितः॥ ॥ अथब्रह्मचारिमृतौ॥ ॥ ब्रह्मचा
रिमृतेद्वादशषट्त्रीणिवाब्दानिशक्त्याप्रायश्चित्तंकृत्वादेशकालौस्मृत्वामुकगोत्रनाम्नोब्रह्मचारिणोमृतस्यव्रतविसर्गंकरि
ष्येतदंगतयानांदीश्राद्धंकरिष्यइत्युक्त्वाहिरण्येननांदीश्राद्धंकृत्वाग्निप्रतिष्ठापनाद्याघारांतेचतसृभिर्व्याहृतिभिराज्यंहु-
त्वाग्नयेव्रतपतयेस्वाहा॥ अग्नयेव्रतानुष्ठानफलसंपादनायस्वाहा॥ विश्वेभ्योदेवेभ्यःस्वाहेतितिस्रआज्याहुतीर्हुत्वास्विष्ट

कृदादिहोमशेषंसमाप्यपुनर्देशकालौस्मृत्वामुकस्यौर्ध्वदैहिकाधिकारार्थमर्कविवाहंकरिष्ये इत्यादिहिरण्येननांदीश्राद्धांतेर्क
समीपेनीत्वार्कशाखांवागृहीत्वार्कब्रह्मचारिणौहरिद्रयानुलिप्यपीतसूत्रेणसंवेष्ट्यवस्त्रयुग्मेनाछाद्याग्निप्रतिष्ठाद्याघारांतेआ
ज्यहोमः अग्नयेस्वाहा १ बृहस्पतये० २ विवाहविधियोजकाय० ३ यस्मैत्वा काम कामाय वयंसम्राड्यजामहे॥ तमस्मभ्यंका-
मंदत्वाथेदंत्वंघृतंपिबस्वाहा॥ कामायेदं०॥ ततोव्यस्तसमस्तव्याहृतिहोमः॥ एवमष्टाहुत्यंतेस्विष्टकृदादिकृत्वार्कशाखांब्रह्म
चारिशवंचतुषाग्निनाविधिवद्दहेत्॥ स्नातकमरणेप्येवमितिकेचित्॥ एतन्निर्मूलमित्यन्ये॥ सूतकांतेत्रिंशद्ब्रह्मचारिभ्यःकोपी
नकृष्णाजिनकर्णभूषणादिपादुकाछत्रगोपीचंदनमाल्यमणिविद्रुममालायज्ञोपवीतादियथासंभवंदद्यात्॥ अथकुष्ठिमृ-
तौ॥ मृतस्यकुष्ठिनोदेहंतीर्थेवाप्सुविवाक्षिपेत्॥ नदाहंनोदकंपिंडंनचैदानक्रियांचरेत्॥ यदिस्नेहाच्चरेद्दाहंयतिचांद्रायणंच-
रेत्॥ तथाचशक्त्यानुसारेणषडब्दादिप्रायश्चित्तंकृत्वाकुष्ठादिमहारोगमृतस्यदाहादिक्रियांकुर्यान्नान्यथेति॥ अथरजस्वला-
दिमरणे॥ रजस्वलायाः प्रेतायाः संस्कारादीनिनाचरेत्॥ ऊर्ध्वंत्रिरात्रात्स्नात्वातांशवधर्मेणदाहयेत् अथवारजस्वलांसूतिकां
चमलंप्रक्षाल्यस्नापयित्वाकाष्ठवदमंत्रकंदग्ध्वास्थीनिमंत्राग्निनादहेत्॥ उभयत्रचांद्रायणत्रयंप्रायश्चित्तमस्त्येव॥ तदेव ७१
मंत्रवद्दाहकरणेछायांतु॥ अद्येत्याद्यमुकगोत्रायारजस्वलावस्थामरणनिमित्तप्रत्यवायपरिहारार्थमौर्ध्वदैहिकयोग्यत्वार्थं

त्रचांद्रायणत्रयप्रायश्चित्तपूर्वकंभूर्पेणाष्टोत्तरशतस्नानानिकारयिष्येइतिसंकल्प्यचांद्रायणत्रयंप्रत्याम्नायेनकृत्वाप्यवपि
ष्टेनप्रेतमनुलिप्यस्वयंस्नातोभूर्पोदकैरष्टोत्तरशतंवारंस्नापयेत्॥ ततोभस्मगोमयमृत्तिकाकुशोदकैःपंचगव्यैःशुद्धोदकै
श्चसंस्नाप्य॥ यदंतियच्चदूरकइत्यादिपावमानीभिरापोहिष्ठेतितृचेनकायानइत्यादिभिश्चसंस्नाप्यपूर्ववस्त्रंपरित्यज्यान्य
वस्त्रेणवेष्ट्यसंदहेत्॥ सूतिकायामप्येवं॥ सूतिकायाआद्यत्र्यहमरणेत्र्यब्दंप्रायश्चित्तं॥ द्वितीयत्र्यहेद्व्यब्दं॥ तृतीयत्र्यहेएका
ब्दंदशमदिनेतुकृच्छ्रत्रयमितिविशेषः क्वचिदुक्तः॥ मासपर्यंतमपिकृच्छ्रत्रयमित्यन्ये॥ मिताक्षरायांतुकुंभेजलमादायपंच
गव्यंक्षिप्त्वापुण्यमंत्रैरापोहिष्ठावामदेव्यावारुणादिभिरभिमंत्र्यपूर्वोक्तमंत्रैःसंस्नाप्यविधिनासूतिकांदहेदितिविशेषउक्तः
॥ इतिरजस्वलासूतिकयोर्विधिः॥ ॥ अथगर्भिणीमरणे॥ ॥ गर्भिण्यामृतायाःशुद्ध्यर्थंत्रयस्त्रिंशत्कृच्छ्राणिकृत्वागांभूमिं
सुवर्णंचदत्वागर्भंपृथक्कृत्यतांदहेत्॥ सहगर्भदहनेतत्तद्वधप्रायश्चित्तं॥ सगर्भापादाहकर्तुरब्दत्रयंप्रायश्चित्तं॥ अथान्वा
रोहणंस्त्रीणांमात्मनोभर्तुरेवच॥ सर्वपापक्षयकरंनिरयोत्तारणायच॥ अनेकस्वर्गफलदंमुक्तिदंचतथैवच॥ जन्मांतरेत्वसौ
भाग्यंधनपुत्रादिवृद्धिदं॥ तिस्रःकोट्योर्द्धकोटीचंयावंत्यंगरुहाणिवै॥ तावंत्यब्दसहस्राणिस्वर्गलोकेमहीयते॥ मातृकंपैतृ
कंचवयत्रकन्याप्रदीयते॥ कुलत्रयंपुनातेषांभर्त्तारंयानुगच्छतीत्यादिमाहिमाविस्तरोमिताक्षरादौज्ञेयः॥ अत्रनिष्कामत्वेमुक्तिः

सकामत्वेस्वर्गादिफलानीतिव्यवस्था ॥ ॥अथप्रयोगः॥ ॥ देशकालौस्मृत्वामातृपितृश्वशुरादिकुलपूतत्वब्रह्महत्यादिदोष
दूषितपतिपूतत्वपत्यवियोगारुंधतीसमाचारत्वसार्द्धकोटित्रयसहस्रसंवत्सरस्वर्गमहीयमानत्वादिपुराणोक्तानेकफलप्राप्त
यैश्रीलक्ष्मीनारायणप्रीतिद्वाराविमुक्तप्राप्तयेवापतिचितान्वारोहणंकरिष्यइतिसंकल्प्यहरिद्राकुंकुमवस्त्रफलादियुतानि
शूर्पाणिसुवासिनीभ्योदद्यात् ॥ तत्रमंत्रः ॥ लक्ष्मीनारायणोदेवोबलसत्वगुणाश्रयः ॥ गाढसत्वंचमेदेयाद्वायनैःपरितोषित
॥सोपस्कराणिशूर्पाणिवायनैःसंयुतानिच ॥ लक्ष्मीनारायप्रीत्यैसत्वकामाददाम्यहम् ॥ अनेनसोपस्करशूर्पदानेनलक्ष्मीना
रायणौप्रीयेतां ॥ ततोंचलेपंचरत्नंनीलांजनंचबध्वामुखेमौक्तिकंन्यस्याग्निसमीपंगत्वाग्निंप्रार्थनंकुर्यात् ॥ स्वाहासंश्लेषनि
विण्णशर्वगोत्रहुताशन ॥ सत्वमार्गप्रदानेननयमांपत्युरंतिकमिति ॥ अथाग्नावाज्येनजुहुयात् ॥ अग्नयेतेजोधिपतयेस्वा
हा ॥ १ विष्णवेसत्वाधिपतयेस्वा० २ कालायधर्माधिपतये० ३ पृथिव्यैलोकधिष्ठात्र्यै० ४ अद्भ्योरसाधिष्ठात्रिभ्यः ५ वायवेबला
धिपतये० ६ आकाशायसर्वाधिपतयेस्वाहा० ७ कालायधर्माधिष्ठात्रे० ८ अद्भ्यःसर्वसाक्षिणीभ्यः० ॥ ब्रह्मणेवेदाधिपतये० १०
रुद्रायस्मशानाधिपतयेस्वाहेत्येकादशाहुतीर्हुत्वाग्निंप्रदक्षिणीकृत्यदृषदमुपलांसंपूज्यपुष्पांजलिंगृहीत्वाग्निंप्रार्थयेत् ॥ ७२
त्वमग्नेसर्वभूतानामंतश्चरसिसाक्षिवत् ॥ त्वमेवसर्वंजानीषेनविदुर्यानिमानुषाः ॥ अनुगच्छामिभर्तारंवैधव्यभयपीडिता

सत्यमार्गप्रदानेनतनयमांभर्त्तुरंतिकं॥ मंत्रमुच्चार्यशनकैः प्रविशेच्चहुताशनं॥ प्रविशन्त्वेमानारीरविधवाइत्यृचं॥ इमाःपतिव्रताः पुण्याः
स्त्रियोयापापाःसुशोभनाः॥ सहभर्तृशरीरेणसंविशंतुविभावसुमितिचपठेत्‌कातरांतुप्रेतोत्तरतःसुप्तांदेवरःशिष्योवोदीर्ष्वेतिमंत्रास्त्या
मुत्थापयेत्‌॥ अनुव्रजतिभर्त्तारंस्मशानंयागृहान्मुदा॥ पदेपदेश्वमेधस्यफलंप्राप्नोतिसाध्रुवं॥ यत्तु॥ यास्त्रीब्राह्मणजातीयामृ-
तंपतिमनुव्रजेत्‌॥ सास्वर्गमात्मघातेननात्मानंनपतिंनयेदितिब्राह्मण्यानिषेधवचनजातंतत्पृथक्चितिपरं॥ भर्तुर्मंत्राग्निदाहोत्तर
मनुगमनंपृथक्चित्तिः॥ मंत्राग्निदाहात्पूर्वमस्थिभिःपर्णशरेणवासहगमनंमेकचितिरेव॥ अस्थ्यादेःपतिस्थानापसापतिशरीर
तुल्यत्वात्‌॥ इयमेकचितिःसर्ववर्णानां॥ पृथक्चित्तिस्तुक्षत्रियवैश्यशूद्रादेरेव॥ नतुब्राह्मणीनां॥ पृथक्चितिविधिस्तुदेशांतर
मृतेपत्यौसाध्वीतत्पादुकाद्वयंनिधायोरसिसंशुद्धाप्रविशेज्जातवेदसमिति॥ पतितेनप्रायश्चित्तार्थंमृतेनवाभर्त्रासहान्वारोहणंन
भवति॥ यत्तुब्रह्मघ्नोवाकृतघ्नोवामित्रघ्नोवाभवेत्पतिः॥ पुनात्यविधवानारीइत्यादिवाक्यंतज्जन्मांतरीयब्रह्महत्यादिपापशोधनप
रंदिनैकगम्यदेशस्थासाध्वीचेत्कृतनिश्चया॥ नदहेत्स्वामिनंतस्यायावदागमनंभवेत्‌॥ तृतीयेन्हिउदक्यायांमृतेभर्तरिवैद्विजाः॥
तस्याःसहगमार्थंतस्थापयेदेकरात्रकं॥ रजस्वलायाःप्रथमद्वितीयदिनेपतिमृतौलौकिकाग्निभिरमंत्रकंतंदग्ध्वापंचमेन्ह्यस्थिभिः
सहान्वारोहणंयदिरजस्वलादेशकालवशाद्दिनातदैवानुगंतुमिच्छतितनशुद्धिंप्रतीक्षेततदासेकद्रोणमितव्रीहीन्मुसलैरपहत्यतद्

ध॰सिं॰ यानैः सर्वैरजोनिवृत्तौपंचमृत्तिकाभिः शौचंकृत्वादिनक्रमेणत्रिंशाद्विंशतिर्दशवार्धेनूर्द्ध्वाविप्रवचनाच्छुद्धिंलब्ध्वासहगमनंकुर्यात्॥अ प॰उ॰
७२ त्रावहननेनरजोनिवृत्तिरतौद्वितीयेतौद्युगांतरपरयोज्यमितिभाति॥जननमृताशौचयोस्तुसहगमनंनेतिकेचित्॥कालतत्त्वविवेचने ३
तुपूर्वप्रवृत्ताशौचमध्येभर्तृमरणेआशौचवतीनामपिभार्याणांसहगमनंभवतिसूतिकोदक्ययोस्तुनेत्युक्तंभातिइदंचसहगमनंगर्भि-
णीबालापत्यासूतिकाभिरदृष्टरजोभिः पतिताभिर्व्यभिचारिणीभिर्भर्तृदुष्टभावाभिश्चनकार्यं॥केचिदत्रपतिव्रतानामेवाधिकारः
॥वर्ततेयाश्चसंततंभर्तॄणांप्रतिकूलताः॥कामात्क्रोधाद्भयान्मोहात्सर्वाःपूताभवंतिताइत्यादितुवाक्यमर्थवादइत्याहुः॥ अत्रपृथ
क्चित्यारोहणेभर्त्राशौचमध्येतदूर्ध्वंवाकृतेत्रिरात्रमाशौचंपिंडाश्चसहगमनेतुतस्याःपिंडादिकंशौचंपतिपिंडादितःक्रमात्॥अ
न्वारोहेतुनारीणांपत्न्यैकोदकक्रिया॥पिंडदानक्रियातद्वच्छ्राद्धंप्रत्याब्दिकंतथा॥अन्वारोहकृतेपत्न्याः पृथक्पिंडांस्तिलांजली
न्॥ पृथक्तिलेनकुर्वीतदद्यादेकशिलेतथा॥ तत्रापिपूर्वपिंडार्थेपाकैक्यंभिन्नपिंडता॥ नवश्राद्धानिभिन्नानिसपिंडीकरणंपृथक्
॥ एकएववृषोत्सर्गोगौरेकातत्रदीयते।सपिंडीकरणंतुनकार्यं॥ अथवाभर्त्रैवसहकार्यमित्यादिपक्षाउक्ताः॥मासिकसांवत्सरिका
दौपाकैक्यकालैक्यादिव्यवस्थापिश्राद्धप्रकरणेउक्ता॥ ॥इतिसहगमनेनिर्णयः॥ ॥काशीनाथउपाध्यायइत्यमंत्यक्रियावि- ७३
धीं॥निर्णयभगवत्प्रसादेनार्पयत्तद्विश्वरूद्ध्ये॥ इत्यंत्यष्टिनिर्णयः॥ अथविधवाधर्माः॥ पत्यौमृतेतुभार्याणांविधिद्वयमुदीरितं।

वैधव्यंपालयेत्सम्यक्सहाग्निगमनंतुवा॥ पत्योमृतेचयायोषिद्वैधव्यंपालयेत्सदा॥ सापुनःप्राप्यभर्त्तारंस्वर्गलोकंसमश्नुते॥
विधवापालयेच्छीलंशीलभंगात्पतत्यधः॥तद्दुःगुण्यादपिस्वर्गात्पतिःपततिसर्वथा॥ तस्याःपिताचमाताचभ्रातृवर्गस्तथैवच
॥विधवाकबरीबंधोभर्तुर्बंधायजायते॥शिरसोवपनंतस्मात्कार्यंविधवयासदा॥ एकवारंसदाभुक्तिरुपवासव्रतानिच॥प
र्यंकशयनान्नारीविधवापातयेत्पतिं॥नैवांगोद्वर्तनंकार्यंगंधद्रव्यस्यसेवनं॥नाधिरोहेदनड्वाहं प्राणैःकंठगतैरपि॥ कंचुकंनप-
रिदध्याद्वासोनविकृतंवसेत्॥ वैशाखेकार्तिकेमाघेविशेषनियमंचरेत्॥ तांबूलाभ्यंजनंचैवकांस्यपात्रेचभोजनं॥यतिश्चवि
धवाचैववर्जयेच्चंदनादिकं॥अपुत्राविधवाभर्त्रादित्रयमुद्दिश्यप्रत्यहंतिलकुशोदकैस्तर्पणंकुर्यात्॥श्राद्धादौतुमागुक्तं॥ ॥
अथसंन्यासः॥ ॥तत्रब्रह्मचर्यंकृत्वासमावर्तनांतेकृतदारःपुत्रानुत्पाद्ययज्ञैरिष्ट्वावानप्रस्थाश्रमंचकृत्वासंन्यसेदित्याश्रम
समुच्चयपक्षः॥ब्रह्मचर्यादेवप्रव्रजेद्गृहाद्वावनाद्वा॥ अथपुनरव्रतीवाव्रतीवास्नातकोस्नातकोवोत्सन्नाग्निरनग्निकोवायद
हरेवविरजेत्तदहरेवप्रव्रजेदित्याश्रम विकल्पपक्षः॥प्रव्रजेद्ब्रह्मचर्याद्वाप्रव्रजेच्चगृहादपि॥ वनाद्वाप्रव्रजेद्विद्वानातुरोवाथदुः
खितइतिवाक्येआतुरोमुमूर्षुः॥दुःखितश्चोरव्याघ्रादिभीतइत्यर्थः॥ आतुराणांचसंन्यासेनविधिर्नैवचक्रिया॥ प्रैषमात्रंसमु
च्चार्यसंन्यासंतत्रकारयेत्॥ संन्यासेदंडग्रहणादिरूपेविविदिषाख्येविप्रस्यैवाधिकारः॥विद्वत्संन्यासेतुक्षत्रियवैश्ययोरपि॥

कलियुगेसंन्यासनिषेधस्त्रिदंडसंन्यासपरइतिप्राच्यः॥सचसंन्यासश्चतुर्धा॥कुटीचकोबहूदकोहंसःपरमहंसश्चेति॥तत्रोत्तरो
त्तरः॥श्रेष्ठः॥बहिःकुट्यांगृहेवावसन्काषायवासास्त्रिदंडीशिखायज्ञोपवीतवान्बंधुषुपुत्रेषुवाभुंजानआत्मनिष्ठोभवेत्सकुटी
चकः॥पुत्रादीन्हित्वासप्तागाराणिभैक्षंचरन्पूर्वोक्तकाषायवस्त्रादिवेषवान्बहूदकः॥हंसस्तुपूर्वोक्तवेषोप्येकदंडः॥परमहंस
स्तुशिखायज्ञोपवीतहीनएकदंडीस्यात्॥काषायवस्त्रत्वंचचतुर्णामपि॥हंसपरमहंसयोःशिखायज्ञोपवीतसत्वासत्वाभ्यांभेदः
॥एकदंडस्तुद्वयोरपिपरमहंसस्यदंडधारणंविविदिषादशायांनित्यं॥विद्वत्तादशायांतुकृताकृतं॥नदंडनशिखांनाच्छादनंचरति
परमहंसइतिश्रवणात्वैराग्यंविनाजीवनार्थेसंन्यासेतुनरकः॥एकदंडंसमाश्रित्यजीवंतिबहवोनराः॥नरकेरौरवेघोरेक-
र्मत्यागात्पतंतिते॥काष्ठदंडोधृतोयेनसर्वाज्ञानवर्जितः॥सयातिनरकान्घोरान्नित्यादिस्मरणात्॥ ॥अथसंन्यासग्रहणविधिः॥
तत्रोत्तरायणंप्रशस्तं॥ आतुरस्यदक्षिणायनमपि॥ तत्रादौगृहस्थाभिमतंतादृशयतिंविधुरंप्रतिचप्रयोगः॥तत्रशांत्यादिलक्षणंगु
रुंसंशोध्यतन्निकटेत्रिमासंयतिधर्मान्संवीक्ष्यगायत्रीजपरुद्रजपकूष्मांडहोमादिभिःशुद्धिंलब्ध्वारिक्तातिथ्यांदेशकालौस्मृ
त्वामुकस्यममकरिष्यमाणसंन्यासेधिकारार्थंचतुःकृच्छ्रात्मकंप्रायश्चित्तंप्रतिकृच्छ्रंतत्प्रत्याम्नायैकैकगोनिष्क्रयद्वाराहमाचरि
ष्ये॥कृच्छ्रप्रत्याम्नायगोनिष्क्रयंद्रव्यंविप्रेभ्योदातुमुत्सृजे इतिसंकल्पपूर्वंकरजतनिष्कतदर्धतदर्धान्यतमंप्रतिधेनुंदद्यात्॥एका

दर्शयांद्वादशपांवायथाब्रह्मरात्रिःस्यात्तथाश्राद्धान्यारभेत्॥ अत्रानाश्रमिणश्चतुःकृच्छ्रमन्यस्यतप्तकृच्छ्रमितिसिंधुः॥ स्वस्यनव
श्राद्धषोडशश्राद्धसपिंडीकरणानिसाग्निःपार्वणविधिनानिरग्निरेकोद्दिष्टविधिनाकुर्यादितिकेचित्॥ नेत्यन्ने॥ अथाष्टश्राद्धानि
॥ तत्रापस्तंबहिरण्यकेशीयादीनामग्नौकरणपिंडादिरहिताःसांकल्पिकःप्रयोगः॥ आश्वलायनादीनांसपिंडकःपार्वणप्रयो
गः॥ तत्रादौसव्येनसयवजलेनश्राद्धांगतर्पणं॥ ब्रह्माणंतर्पयामि॥ विष्णुं० महेश्वरं० देवर्षीन्० ब्रह्मर्षीन्० क्षत्रर्षीन्० वसून्० रु
द्रान्० आदित्यान्० सनकं० सनकं० सनंदनं० सनातनं० पंचमहाभूता० चक्षुरादिकरणानि० भूतग्रामं० पितरं० पितामहं० प्रपिता
मं० मातरं० पितामहीं० प्रपितामहीं० आत्मानं० पितरं० पितामहं० इतिनद्यादौकृत्वागृहमागत्यदेशकालौस्मृत्वाकरिष्यमाण
संन्यासांगत्वेनाष्टश्राद्धानिपार्वणविधिनाम्नेनामेनवाकरिष्य इतिसंकल्प्यक्षणंदद्यात्॥ अत्रसर्वंनांदीश्राद्धवत्॥ तेनेनाप
सव्यंतिलस्थानेयवायुग्माविप्राः॥ तथाचदेवस्थानेविप्रौद्वौश्राद्धेप्रत्येकेषोडशोत्यष्टादशाविप्राः॥ तत्रसत्यवसुसंज्ञकाविश्वेदेवा
नांदीमुखास्थानेक्षणःकर्तव्यइत्येकंवृत्वाद्वितीयंवृणुयात्॥ एवमग्रेपिप्रथमेदेवश्राद्धेब्रह्मविष्णुमहेश्वरानांदीमुखास्था०
द्वितीयेऋषिश्राद्धेदेवर्षिब्रम्हर्षिक्षत्रर्षयोनां०२ तृतीयेदिव्यश्राध्देवसुरुद्रादित्यानांदी०३ चतुर्थेमनुष्यश्राद्धेसनकसनंदन
सनातनानांदी०४ पंचमेभूतश्राद्धेपृथिव्यादिपंचभूतान्येकादशचक्षुरादिकरणानिचतुर्विधभूतग्रामानां०५ षष्ठेपितृश्राद्धेपि

तृपितामहप्रपितामहानांदी० ६ सप्तमेमातृश्राद्धेमातृपितामहीप्रपितामह्योनांदी० ७ अष्टमेआत्मश्राद्धेआत्मपितृपितामहानांदी० ८
आत्मांतरात्मापरमात्मेतिकेचित्॥ इतिद्वौ द्वौविप्रौवृणुयात्॥ सर्वत्रनांदीमुखबंविशेषणं॥युग्माविप्राः॥ सत्यवसूदक्षक्रतूवादे
वौततः सर्वेषांपाद्यंदत्वाप्राङ्मुखानुदक्संस्थानुपवेश्यप्रार्थयेत्॥ संन्यासार्थमहंश्राद्धंकुर्वेब्रूतद्विजोत्तमाः॥ अस्तुज्ञांप्राप्यशुभा
कंसिद्धिंप्राप्स्यामिशाश्वतींकुरुइतिप्रत्युक्तः॥ सयवत्रऋजुदूर्वादियुग्मेनाब्दानपूर्वकंसंबुध्यंतेइदमासनमित्यष्टादशस्वासनंदद्या
त्॥ ततआश्वलायनानामर्घ्यपात्रासादनं॥ आपस्तंबादीनांसांकल्पिकत्वान्नार्घ्यं॥ देवार्थमेकंपार्वणाष्टकार्थमष्टावित्येवंनवपा
त्राणि॥सर्वत्रपवित्रद्वयांतर्हितेषुशन्नोदेवीरित्यप आनिच्यविश्वेदेवपात्रेयवोसीतियवाअष्टपात्रेषुतिलोसीतिमंत्रस्योहेनयवा
नोप्यगंधपुष्पादिपूजनं॥ ऊहस्तु ॥ यवोसिसोमदेवत्योगोसवे देवनिर्मितः॥ प्रत्नवद्भिःप्रत्तःपुष्ट्यानांदीमुखान्देवान्प्रीणयाहिन
स्वाहानमः॥ इतिप्रथमपात्रे॥ द्वितीयेनांदीमुखानृषीन्० तृतीयेनांदीमुखान्दिव्यान्प्रीण०॥ चतुर्थेनांदीमुखान्मनुष्यान्प्री० पं
चमेनांदीमुखानिभूतानिप्री० षष्ठसप्तमाष्टमेषुनांदी० पितृन्प्रीणयेत्यादि॥ एकैकंपात्रंद्विधाविभज्यसर्वत्रयादिव्याइतिमंत्रेणावि
श्वेदेवानांदीमुखाइदंवोर्घ्यमितिवाब्रह्मविष्णुमहेश्वरानांदीमुखाइदंवोर्घ्यंस्वाहानमइत्यादिनायथायथंषोडशविप्रहस्तेषुदद्या
त्॥यादिव्याइतिस्त्रवदनुमंत्रणं॥ पात्रंन्युब्जीकृत्यगंधाद्याच्छादनांतपूजा॥ तत्रसर्वत्रसंबुध्यंतोनांदीमुखविशेषणयुक्तउच्चा

रः॥ भोजनपात्राण्यासाद्य ब्रह्मादिषोडशविप्रकरेषु अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहेति मंत्राभ्यामाहुतिद्वयं द-
द्यात् नेदमापस्तंबादीनां॥ उपस्तीर्यान्नं परिविष्यान्नाभावे आमं तन्निष्क्रयं वा पृथ्वीते पात्रमित्यादिना यथादैवतमन्नस्यामादे-
र्वा त्यागः॥ ये देवास० प्रजापते न० ब्रह्मार्पणं ब्रह्म० अनेनाष्टश्राद्धेन नांदीमुखा देवादयः प्रीयंतां॥ अपोशानदानांते बलिदानवर्ज्यं
भुंजीरन्॥ तृप्तेषु रूपांस्मै० अक्षन्नमी० संपन्नमिति ष्टष्टे रुचिरमिति सर्वे ब्रूयुः नेदमाश्वलायनानां॥ आचांतेषु यवलाजदधिबदरिमिश्रान्ने-
नाष्टचत्वारिंशत्पिंडान्कृत्वा प्रागपवर्गा उदक्संस्था अष्टौ रेखाः कृत्वाभ्युक्ष्य कुशान्दूर्वा वास्तीर्य पिंडस्थानेषु चतुर्विंशतौ जलं सिंचे-
त्॥ तद्यथा॥ शुंधंतां ब्रह्माणो नांदीमुखाः॥ शुंधंतां विष्णवो नांदीमुखाः॥ शुंधंतां माहेश्वरा नां० इति प्रथमरेखायां॥ तदुत्तररे-
खासु शुंधंतां ब्रह्मर्षयो नांदी० इत्याद्यूहो ज्ञेयः॥ ततो ब्रह्मणे नांदीमुखाय स्वाहेत्येकं पिंडं दत्त्वा द्वितीय एवमेव देयस्तूष्णीं वेति
प्रतिदैवतं पिंडद्वयं॥ एवमग्रेऽपि विष्णवे नांदीमुखाय स्वाहेत्यादयः स्वाहांताः॥ पिंडदानमंत्रा उह्याः अत्र पितरो मादयध्वमित्या-
दि पुनः शुंधंतां ततं त्रमंजनमभ्यंजनं च कृताकृतं॥ पिंडानां धारदिना संपूज्य नत्वोपसन्नमिति विसृज्य विप्रेभ्यो दक्षिणा दद्यात्॥
नेदं पिंडदानाद्यापस्तंबादीनां॥ कात्यायनानामाश्वलायनवत्॥ अष्टश्राद्धोत्तरं तद्दिने द्वितीये वा षट्शिखा केशान्स्थापयित्वा कक्षो-
पस्थवर्ज्यं केशश्मश्रुनखादिवापयित्वा स्नात्वा कौपीनाच्छादनादि होमद्रव्यं च विनान्यत्॥ धनादिविप्रादिभ्यः पुत्रादिभ्यश्च त्य-

जेतकौपीनादिकंगैरिकरंजितंकृत्वावैणवंदंडंसत्वचंशिरोभ्रूललाटान्यतमप्रमाणंसमूलमंगुष्ठिस्थूलंविभानीतमेकादश
नवचतुःसप्तान्यतमपर्वकंपर्वग्रंथियुतंमुद्रायुतंसंपाद्यशंखोदकेनप्रणवपुरुषसूक्तकेशवादिनामभिरभिषिच्यस्थापये
त्॥ततःकमंडलुंकौपीनाच्छादनकंथापादुकाःस्थापयेत्॥शिक्यपात्रादिकमपिकिंचित्॥देशकालौसंकीर्त्याशेषदुःखनि
वृत्तिनिरतिशयानंदप्राप्तिपरपुरुषार्थप्राप्तयेपरमहंसाख्यसन्यासग्रहणंकरिष्ये॥तदंगतयागणपतिपूजननांदीश्राद्धा
निकरिष्ये॥तानिकृत्वाजपेत्॥ब्रह्मणेनमः॥विष्णवेन॰रुद्राय॰सूर्याय॰सोमाय॰आत्मने॰अंतरात्म परमात्मने॰॥अग्नि
मीळेऋक्॥इषेत्वोर्जेत्वा॰अग्नआयाहि॰ऋक्॥शन्नोदेवीऋक्॥जपित्वासक्तुपिष्टंमुष्टित्रयंप्रणवेनत्रिःप्राश्यप्रनाभिमालभेत्
आत्मनेस्वाहा॥अंतरात्मने॰परमात्मने॰प्रजापतयेस्वाहेतिमंत्रैः ततःपयोदधिमिश्रमाज्यंजलमेववाग्निहृदसीतिद्वितीयं
विद्वृदसीतितृतीयंप्राश्यापःपुनंत्वितिजलंप्राश्याचम्योपवासंकरिष्येइतिसंकल्पयेत्॥अथसावित्रीप्रवेशः॥ॐभूःसावि
त्रींप्रविशामिॐ तत्सवितुर्वरेण्यं ॐभुवःसावित्रींप्रविशामिभर्गोदेवस्य॰ॐस्वःसावित्रीं॰धियो॰ॐभूर्भुवःस्वःसावित्रींप्र
विशामि॥तत्सवितु॰ऋक् ततोस्तात्प्राक्गृह्याग्निंसमिध्यविच्छिन्नश्चेत्पुनःसंधानविधिनानिरग्निर्वाविधुरादिर्वापैष्टोदिविधि ७९
धानंचकात्यायनंवैश्वदेवप्रसंगेपूर्वार्धेउक्तं॥अथास्तत्पूर्वंब्रह्मान्वाधानं॥ ॥संन्यासंकर्तुंब्रह्मान्वाधानंकरिष्ये इतिसंक

ल्याग्नीध्यानाद्याज्यंसंस्कृत्य स्रुक्स्रुवौ संमृज्य स्रुचि चतुराज्यंगृहीत्वोमस्वाहेतिहुत्वापरमात्मन इदं० परिषेचनादि ॥ इतिब्र-
ह्मान्वाधानं ॥ ततः सायंसंध्याहोमवैश्वदेवान्कृत्वाग्निसमीपेजागरंकुर्यात् ॥ प्रातर्नित्यहोमांतेवैश्वदेवादिकंकृत्वाग्नेयंवैश्वा
नरंवास्थालीपाकंकुर्यात् ॥ तत्रकरिष्यमाणसंन्यासपूर्वांगभूतमाग्नेयस्थालीपाकंकरिष्यइतिसंकल्प्य ॥ ध्यात्वाचक्षुषीआ
ज्येनेत्यंतेतत्रप्रधानमग्निंचरुणाशेषेणेत्यादि ॥ अग्नेस्त्वाजुष्टंनिर्वपामीत्यादिनाम्नानिर्वापादि ॥ नाम्नैवप्रधानहोमः ॥ एवं
वैश्वानरपक्षेप्यूह्यं ॥ ततस्तरत्समंदीतिजपित्वाकुशाहेमरूप्यजलैः स्नात्वादशार्दस्मृत्वासंन्यासांगभूतंप्राणादिहोमंपुरु
षसूक्तहोमंविरजाहोमंचतंत्रेणकरिष्येइतिसंकल्प्यान्वाधानेआज्यनेत्यंतेप्राणादिपंचदेवताः समिच्चर्वाज्यैः पुरुषंपुरुष
सूक्तेनप्रत्यृचंदशवारंसमिच्चर्वाज्यैः प्राणाद्येकोनविंशतिदेवताविरजामंत्रैः प्रतिद्रव्यमेकैकसंख्यसमिच्चर्वाज्याहुतिभिः
प्रजापतिंसकृदाज्येनशेषेणेत्यादिषष्ठ्युत्तरशतवारंतूष्णींनिरूप्यतथैवप्रोक्ष्यश्रपयित्वाज्यभागांतेप्राणायस्वाहेत्यादि
पंचमंत्रैर्द्रव्यत्रयंसकृत्सकृद्धुत्वायथादैवत्यन्त्कासहस्रशीर्षेतिषोडशर्चेनप्रत्यृचंपृथक्पृथक्द्रव्यत्रयंहुत्वापुरुषायेदं
नममेतिसर्वत्रत्यजेत् ॥ अथविरजाहोमः ॥ प्राणापानव्यानोदानसमानामेशुध्यंतांज्योतिरहंविरजाविपाप्माभूयासं
स्वाहाप्राणादिभ्यइदं० वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूतिसंकल्पामेशुध्यंतांज्योति० वागादिभ्यइदं० त्वक्

सं·सिं· ७७ चर्ममांसरुधिरमेदोमज्जास्नायवोस्थीनिमेशुध्यं० त्वगादिभ्यइदं० शिरःपाणिपादपार्श्वपृष्ठोरूदरजंघशिश्नोपस्थपायवो उ·प· ३
मेशुध्यं० शिर आदिभ्य० उत्तिष्ठपुरुषहरितपिंगललोहिताक्ष देहि ददापयितामेशुध्यं० पुरुषादिभ्य० पृथिव्यापस्तेजोवायुराका
शोमेशुध्यं० पृथिव्यादिभ्य० शब्दस्पर्शरूपरसगंधामेशुध्यं० शब्दादिभ्य० मनोवाक्कायकर्माणिमेशुध्यं० मनआदिकर्मभ्य०
अव्यक्तभावैरहंकारैर्ज्योतिरहं० अव्यक्तादिभ्य० आत्मामेशुध्यंतांज्यो० आत्मने० अंतरात्मामे० अंतरात्मने० परमात्मामे० पर०
क्षुधेस्वाहा॥ क्षुधइदं० क्षुत्पिपासायैस्वाहा॥ क्षुत्पिपासाया इदं० विविधैस्वाहा॥ विविधाया इ० ऋग्विधानाय० कषोत्काय
स्वाहा क्षुत्पिपासामलंज्येष्ठामलक्ष्मींनाशयाम्यहं॥ अभूतिमसमृद्धिंचसर्वान्निर्णुदमेपाप्मान स्वाहा अग्नयइदं० अन्न
मयप्राणमयमनोमयविज्ञानमयानंदमय आत्मामेशुध्यंतां० अन्नमयादिभ्य० एवंसमिच्चर्वाज्यैः प्रतिद्रव्यंचत्वारिंशदा
हुतीर्हुत्वा॥ यदिष्टंयच्चपूर्तंयच्चापद्यनापदि॥ प्रजापतौतन्मनसिजुहोमिविमुक्तोहंदेवकिल्बिषात्स्वाहेत्याज्यंहुत्वा
प्रजापतयइदमितित्यजेत्॥ ततः पुरुषसूक्तअग्निमीळेइत्यादिचतुर्वेदादींश्चजपित्वास्विष्टकृदादिहोमशेषंसमाप्य
ब्रह्मचर्यादिभ्योगोहिरण्यवस्त्रादिदत्वासमासिंचंतुमरुतइतिमंत्रेण गृह्याग्निमुपस्थायतत्रदारुपात्राणिदहेत्तेजसा ७७
निग्फ़रवेदद्यात्॥ ततआत्मन्यग्निसमारोपं॥ अयंतेयोनिर्रित्वियोयातेअग्नेयज्ञियातनूस्तयत्यारोहात्मात्मानमित्या०

दिपज्रुषावग्निरुक्तेनाग्नेर्ज्वोलांप्राश्नंकुर्यात्॥ कृष्णाजिनमादाय गृहान्निष्क्रम्य सर्वेभवंतुवेदाढ्याः सर्वेभवंतुसोमपाः॥ सर्वेपुत्रसुखं
दृष्ट्वासर्वेभवंतुभिक्षुकाइतिपुत्रादिभ्यआशिषंदत्वानमेकश्चिन्नाहंकस्यचित्पुत्रादीनुक्त्वाविसृजेत्॥ जलाशयंगत्वांजलिनाजलमादा
यापःशिवानइतिसूक्तेनाभिमंत्र्यसर्वाभ्योदेवताभ्यःस्वाहेतित्यजेत्॥ निध्यादिस्मृत्वा परोक्षब्रह्मावाप्तयेसन्यासंकरोमीतिसंकल्प्य
जलांजलिंगृहीत्वा ॐएषहवाअग्निःसूर्यःप्राणंगच्छस्वाहा ॐत्वायोनिंगच्छस्वाहा ॐआपोवैगच्छस्वाहेतिमंत्रत्रयेणजलेषंज
लित्रयंदद्यात्॥ पुत्रेषणावित्तेषणालोकैषणासर्वेषणामयापरित्यक्ताअभयंसर्वभूतेभ्यःस्वाहाइत्यंजलिंजलेक्षिपेत्॥ पुनरेवमभ
यंदत्वावदेत्॥ यत्किंचिद्बंधनंकर्मकृतमज्ञानतोमया॥ प्रमादालस्यदोषोत्थंतत्सर्वंसंत्यजाम्यहम्॥ सक्तसर्वोविशुद्धात्मागतस्ने
हशुभाशुभः॥ एषत्यजाम्यहंसर्वंकामभोगसुखादिकं॥ रोषंतोषंविवादंचगंधमाल्यानुलेपनं॥ भूषणंनर्तनंगेयंदानमादानं
मेवचन॥ नमस्कारंजपंहोमंयाश्चनित्यक्रियामम॥ नित्यंनैमित्तिकंकाम्यंवर्णधर्माश्रमाश्चयेसर्वमेवपरित्यज्यदद्दाम्यभयदक्षिणां
॥ पद्भ्यांकराभ्यांविहरन्नाहंवाक्कायमानसैः करिष्येप्राणिनांपीडांप्राणिनःसंतुनिर्भयाः॥ सूर्यादिदेवान्विप्रांश्चसाक्षित्वेनध्यात्वा
नाभिमात्रेजलेप्राङ्मुखःसावित्रीप्रवेशंपूर्ववत्कृत्वातरत्समंदीतिसूक्तंपठित्वापुत्रेषणायावित्तेषणायालोकैषणायाश्चव्युत्थितो
हंभिक्षाचर्यंचरामीतिजलेजलंजुहुयात्॥ ॥अथप्रैषोच्चारः॥ ॥ ॐभूःसन्यस्तंमया ॐभुवःसन्यस्तंमया ॐस्वःसन्यस्तं
मया ॐभूर्भुवःस्वःसन्यस्तंमयेतित्रिर्मंदमध्योच्चस्वरेणोक्त्वाभयंसर्वभूतेभ्योमत्तःस्वाहेतिजलेजलंक्षिपेत्॥ शिखामुत्पाट्य

यज्ञोपवीतमुद्धृत्य करे गृहीत्वा ॥ आपो वै सर्वा देवताः सर्वाभ्यो देवताभ्यो जुहोमि स्वाहा ॐ भूः स्वाहेति जले जलैः स ह हुत्वा प्रार्थ-
येत् ॥ त्राहि मां सर्वलोकेश वासुदेव सनातन ॥ सन्यस्तं मया जगद्धामन् पुंडरीकाक्ष मोक्षद ॥ युष्मच्छरणमापन्नं त्राहि मां पुरुषोत्त-
म ॥ ततो दिगंबरः पंचपदान्युदङ्मुखो गच्छेत् ॥ विविदुपुरुषैस्तस्मै आचार्येण त्वा काषायकौपीनाच्छादने दत्वा दंडं दद्यात् ॥ स च
कौपीनं वासश्च परिधाय ॥ ॐ इंद्रस्य वज्रोसि सखे मा गोपायेति दंडं गृह्णीयात् ॥ प्रणवेन गायत्र्या वा कमंडलुं ॥ इदं विष्णुरि-
त्यासनं ॥ ततः समित्पाणिर्गुरुं नत्वा गरुडासनोपविष्टो गुरुं वदेत् ॥ त्रायस्व भो जगन्नाथ गुरो संसारवह्निना ॥ दग्धं मां कालदष्टं
च त्वामहं शरणं गतः ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ॥ तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्र-
पद्ये इति गुरुमुपस्थाय दक्षिणं जान्वाच्य पादावुपसंगृह्याधीहि भगवो ब्रह्मेति वदेत् ॥ गुरुरात्मानं ब्रह्मरूपं ध्यात्वा जलपूर्णशं-
खं द्वादशप्रणवैरभिमंत्र्य तेन शिष्यमभिषिच्य शन्नो मित्र इति शांतिं पठित्वा तच्छिरसि हस्तं दत्वा पुरुषसूक्तं जपित्वा शिष्यहृदये
हस्तं कृत्वा मम व्रते ते हृदयं ते दधामीत्यादि मंत्रं जपित्वा दक्षिणकर्णे प्रणवमुपदिश्य तदर्थं च पंचीकरणाद्यवबोध्य ॥ प्रज्ञानं ब्रह्म ॥ अय-
मात्मा ब्रह्म ॥ तत्वमसि ॥ अहं ब्रह्मास्मीति ऋग्वेदादिमहावाक्येष्वन्यतमं शिष्यशाखानुसारेणोपदिश्य तदर्थं बोधयेत् ॥ तत
स्तीर्थाश्रमादिसंप्रदायानुसारेण नाम दद्यात् ॥ ततः पर्यंकशौचं कारयित्वा योगपट्टं च दद्यात् ॥ ॥ अथ पर्यंकशौचप्रयोगः
॥ कस्मिंश्चित्पुण्यदिने कश्चिद्गृहस्थः स्वाग्रपीठादौ यतिमुपवेश्य गर्वं नुज्ञातो यतये पर्यंकशौचं करिष्ये ॥ इति संकल्प्य यथा

मध्भागेभाण्डंसंस्थाप्यपंचमृद्भागान्दक्षिणभागेऽपितथैवपंचसंस्थाप्योभयत्रशौचोदकंचसंस्थाप्यवाममध्यममृद्भागेनपंच
वारंमृज्जलाभ्यांपतिजानुद्वयंकराभ्यांयुगपत्प्रक्षालयेत्॥चरमप्रक्षालनेमृद्भागसमाप्तिः॥एवमग्रेऽपि॥ततोदक्षिणभाग
स्यमध्यमभागार्धेनस्ववामकरंमृज्जलाभ्यांदशवारंप्रक्षाल्यापरार्धेनतेनैवजलेनोभौकरौसप्तवारंक्षालयेत्॥एवमग्रेऽपिप
ज्यं॥संख्यायांविशेषस्तूच्यतेवामद्वितीयभागेनचतुर्वारंजंघाद्वयंयुगपत्प्रक्षाल्यदक्षिणद्वितीयभागार्धेनसप्तवारंवामकरम
र्धांतरेणचतुर्वारमुभौचकरौक्षालयेत्॥वामतृतीयेनयतिगुल्फौत्रिवारंदक्षिणभागार्धेनवामकरंषड्वारमुभौचतुर्वारं॥वा-
मचतुर्थेनयतिपादद्वयोद्विवारंदक्षिणार्धेनस्ववामकरंचतुर्वारमुभौद्विवारमवशिष्टार्धेन॥वामपंच मेनयतिपादतलेस
कृद्दक्षिणपंचमार्धेनसकृत्क्षालनमिति॥ ॥अथयोगपट्टः॥ ॥कारितपर्यंकशौचोयतिःकटिशौचंकृत्वाकटिसूत्रकौपी
नेधृत्वावस्त्रेणावगुंठ्यगुर्वनुज्ञयोच्चासनेउपविश्यसाध्यैः सहवेदांतकिंचिदुपन्यसेत्गुरुर्यतिःशिष्यंयतिशिरसिशंखेन
पुरुषसूक्तेनाभिषिच्यवस्त्रगंधपुष्पधूपदीपैःनैवेद्यैःसंपूज्यवस्त्रेण परिधृत्वाऽन्यैर्यतिभिःसहविश्वरूपाध्यायपश्यामिदेवानि
त्यारभ्यभूःस्वराज्यंसमृद्धमित्यंतंपठित्वापूर्वकल्पितंनामदद्यात्॥ततःशिष्यंवदेत्॥इतःपरंत्वयासंन्यासाधिकारिणेसंन्या
सोदेयोदीक्षायोगपट्टादिकंचकार्यं॥ज्येष्ठयतयोनमस्कार्याः॥नमोगुरुः॥कटिसूत्रंपंचमुद्रालंकृतंपूर्वदंडंचशिष्यायद-
त्वाशिष्यंयथासंप्रदायंनमस्कुर्यात्॥अन्ययतयोऽपिगृहिणश्चनमस्कुर्युः॥शिष्योनारायणेत्युक्त्वोच्चासनादुत्थायतत्रगुरुंप्र

 वेश्मयथाविधितत्वान्यथतीन्नमेत् ॥ इतिगृह्याग्निमतांविधुरादेश्चविविदिषासन्यासप्रयोगः ॥ ॥अथाग्निहोत्रिणोविशेषः ॥ 
 तत्रश्रौताग्नेयोविच्छिन्नाश्चेत्पुनराधानपावमानेष्ट्यंतंपूर्णाहुत्यंतंवाकृत्वाप्रायश्चित्तादिसावित्रीप्रवेशांतंपूर्ववत्कुर्यात् ॥अ 
थब्रह्मान्वाधानं ॥ अग्निरूपमिध्मसंस्कृतमाज्यंस्रुचिचतुर्वारंगृहीत्वाहवनीयेपूर्णाहुतिं ॐ स्वाहापरमात्मनइदमितिकु
र्यात् ॥सायंसंध्याग्निहोत्रहोमांतेउत्तरेणगार्हपत्यंदृशःपात्राण्यासाद्याहवनीयदक्षिणतःकोपीनदंडायासादयेत् ॥रात्रि
जागरांतेप्रातर्होमादिकृत्वापौर्णमास्यांब्रह्मान्वाधानंचपौर्णमासेष्टिंकृत्वादर्शेष्टिमग्निपस्सहोमापकर्षपूर्वकमपकृष्यतदेवकुर्या
त् ॥दर्शेचेद्दर्शेष्टिरेव ॥अथपूर्णमास्यांदर्शेवादेशकालौस्मृत्वासन्यासपूर्वांगभूतयाप्राजापत्येष्ट्यावैश्वानर्येष्ट्याचसमानतंत्र
पाधस्येइतिसंकल्प्यसमुच्चयेनेष्टिद्वयं ॥ अथवैश्वानरोद्वादशकपालःपुरोडाशः ॥ प्राजापत्यश्चरुर्वैश्यावोनवकपालःपुरोडाशः
अथवाकेवलप्राजापत्येष्टिः ॥ अत्रप्रयोगःस्वस्वसूत्रानुसारेणोह्यः ॥ बौधायनसूत्रानुसारेणकिंचिदुच्यतेपवनपावनपु-
ण्याहवाचनादिपूर्वांगांतेकेवलवैश्वानरेष्ट्याःकेवलप्राजापत्यायावासंकल्पः ॥ व्रीहिमयाःपुरोडाशाःद्रव्यंपंचप्रयाजाः ॥ अग्नि
र्वैश्वानरःप्रजापतिर्देवतापंचदशसामिधेन्यः ॥ व्रतग्रहणांतेध्वर्युराज्यंसंस्कृत्यस्रुचिचतुर्गृहीतंगृहीत्वापृथिवीहोतेत्यादि
चतुर्होतृहोमंकूष्मांडहोमसारस्वतहोमौचकृत्वानिर्वापादिवैश्वानरोद्वादशकपालःपुरोडाशःप्राजापत्यश्चरुः ॥ वैश्वानराय ७९
प्रतिवेदयामइतिपुरोनुवाक्या ॥ वैश्वानरःपवमानःपवित्रैरितियाज्यायाप्रधानमुपांशुधर्मकंसूक्तःस्वयंभूरित्याप्यधत्तुवा

क्या ॥ प्रजापतेनत्वदे तामितियाज्या ॥ अथस्रुवेणाज्याहुतिहोमा अभयत्र ॥ वैश्वानरोनऊत्या प्रयातुपरावतः ॥ अग्निरुक्थेनवाह
सास्वाहा ॥ वैश्वानरायेदमितित्यागः सर्वत्र ॥ ऋतावानंवैश्वानरमृतस्यज्योतिषस्पतिं ॥ अजस्रंघर्ममीमहेस्वाहा २ वैश्वा
नरस्यद ९ ३ पृष्टोदिविपृष्टो अग्निः ४ जातोयदग्ने ० ५ त्वमग्नेशोचिषा ० ६ अस्माकमग्ने ० ७ वैश्वानरस्यसुमतौ ० ८ अथैनमुपतिष्ठेतस
हस्रशीर्षेतिसूक्तेन ॥ ततः स्विष्टकृदादिशेषंसमापयेत् सर्वोवैरुद्रोविश्वंभूतमितिद्वाभ्यामुपस्थानोत्सर्गः ॥ आयुर्दाअग्नइतिमं
त्रेणदर्भस्तंबस्थयजमानभागात्किंचिदादायसहस्रशीर्षेत्यनुवाकेनप्राश्य ॐमितिदंसर्वमित्यनुवाकेनहुतशेषमाहवनीये
प्रक्षिपेत् ॥ एवंवैश्वानर्याघन्यतरामिष्टिंकृत्वौपासनाग्नौसर्वाधानेदक्षिणाग्नौ प्राणादिहोमा मादिविरजाहोमांतंकार्यं ॥ अन्य
त्पूर्ववत् ॥ ५ ॥ आहवनीयेजणीमुसलोलूखलातिरिक्तदारुपात्राणांदाहः ॥ ततआत्मन्याहवनीयाग्निसमारोपः पूर्ववत् ॥
अरणीद्वयंगार्हपत्येप्रक्षिप्यतत्समारोपंकृत्वा ॥ दक्षिणाग्नौमुसलोलूखलहुत्वा दक्षिणाग्नेरपिसमारोपः ॥ ततऔपासनाग्ने
समारोपइतिक्रमः ॥ अत्रविशेषोन्यत्रज्ञातव्यः इतिसाग्निकप्रयोगः ॥ स्नातकंमौनब्रह्मान्वाधानविरजाहोमादिरहितोवा
प्रयोगोन्यभावात् ॥ अथातुरसंन्यासः ॥ आतुरसंन्यासेसंकल्पप्रैषोच्चाराभयदानेतित्रयंप्रधानमवश्यकंकार्यं ॥ अष्टश्राद्धा
दिदंडग्रहणांतमंगभूतंयथासंभवंकार्यं ॥ तत्प्रयोगः मंत्रस्नानंकृत्वाशुद्धवस्त्रधृत्वानप्राप्तिद्वारामोक्षसिद्ध्यर्थमातुरविधि
नासंन्यासमहंकरिष्ये ॥ पंचकेशानवशोष्यवपनंकृत्वास्नात्वासंध्याद्यौपासनहोमांतंयथासंभवंसंपाद्यात्मनिसमारोपंकु

र्जात्॥ अग्निहोत्री प्राजापत्यादिस्थाने पूर्णाहुतिं कृत्वा श्रौताग्निमात्मनि समारोपयेत्॥ उच्छिन्नाग्नीनां पुनराधानसंभवेऽस
मासेऽपोन्यथा न तु समारोपः॥ विधुरादीनामग्न्यभावादेव समारोपो नावश्यकः॥ ततस्तोयमादायास्य जुहोति॥ एष ह वा अ-
ग्निर्योनिर्यः प्राणः प्राणं गच्छ स्वाहा॥ आपो वै सर्वा देवताः सर्वाभ्यो देवताभ्यो जुहोमीत्याहा २ भूः स्वाहेति जलं जलं हुत्वा हु
तशेषं जलमाश्नः शिशान इत्यनुवाकेनाभिमन्त्र्य पुत्रैषणा वित्तैषणा लोकैषणा मया त्यक्ताः स्वाहेति किंचित्पिबेत्॥ अभय
सर्वभूतेभ्यो मत्तः स्वाहेति द्वितीयं पिबेत् संन्यस्तं मयेति त्रिः शेषं तृतीयं पिबेत्॥ ततः पूर्ववत् सावित्रीप्रवेशः॥ ततः प्राङ्
मुख ऊर्ध्वबाहुः प्रैषोच्चारं पूर्ववत् कुर्यात्॥ अभयं सर्वभूतेभ्यो मत्तः स्वाहेति प्राच्यां जलं क्षिपेत्॥ शिखामुत्पाट्य यज्ञो
पवीतं छित्त्वा भूः स्वाहेत्यप्सु हुत्वा पुत्रगृहे न तिष्ठेत्॥ अत्यन्तमातुरश्चेत् प्रैषमात्रं वा वदेत् जीवति चेत्तस्य संन्यासाहा
वाक्यापदेशादंडग्रहणादि सर्वं कुर्यात्॥ एवमातुरविधिना संन्यासे मृतस्य यतिवत्संस्कारः॥ ॥अथ मृतयतिसंस्कारः॥ ॥पुत्रः शिष्यो
वा स्नात्वा वपनं कृच्छ्रत्रयं चाधिकारार्थं कुर्यात्॥ पुत्रातिरिक्तस्य वपनं कृताकृतं॥ देशकालौ स्मृत्वा ब्रह्मीभूतस्य यतेः शौनकोक्तवि
धिना संस्कारं करिष्ये॥ नवकलशतीर्थेनापूर्य गं च यमुने चैव० नारायणः परं ब्रह्म० यच्च किंचिज्जगत्सर्वं० इति मन्त्रैरभिमन्त्र्य
रुद्रसूक्त विष्णुसूक्तापोहिष्ठादिभिर्यतेः स्नानं विधाय चंदनादिभिः कलेवरं संपूज्य माल्यादिभिरलंकृत्य वाद्यघोषादिभिः
शुद्धदेशं नयेत्॥ जले स्थले वा समाहितं कुर्यात्॥ स्थलपक्षे गर्तं व्याहृतिभिः खनित्वा मूर्ध्नि दंडप्रमाणं कृत्वा सप्तव्याहृतिभिः प

चगव्येनत्रिः प्रोक्ष्यजलपक्षेन ग्रांपंचगव्यं प्रक्षिप्यकुशानास्तीर्यसावित्र्यादेहं प्रोक्ष्यशंखोदकेन पुरुषसूक्तेनाष्टोत्तरशतामृ
तप्रणवैश्चसंस्नाप्याष्टाक्षरेणषोडशोपचारेः संपूज्यतुलसीमालाधैरलंकृत्यविष्णोहृव्यंरक्षस्वेतिदेहंगर्तेन घांवाक्षिपेत्॥रुद्र
विष्णूरितिदंडंत्रेधाभग्नंदक्षिणहस्तेस्थापयेत्॥ हंसः शुचिषदितिपरेणनाकंनिहितमितिहृदयेजपेत्॥ ॥पुरुषसूक्तं
वोर्मध्येजपेत्॥ ब्रम्हजज्ञानमितिमूर्ध्नि मूर्धानंभूर्भुवः स्वश्चेत्यूक्त्वाशंखेनभेदयेत्॥ अथवाभूमिर्भूमिमगान्माताम्मातरम
प्यगात्॥ भूयास्मपुत्रैः पशुभिर्योनोद्वेष्टि सभिद्यतामितिमंत्रेणपरशवादिनाभेदयेत्॥ शिरोभेत्तुमशक्तः शिरःस्थापितं
गुडपिंडादिकंभिंद्यात्॥ गर्तेपुरुषसूक्तेनलवणेनप्रपूरयेत्॥ सृगालश्वादिरक्षार्थंसिकतादिभिः प्रपूरयेत्॥ नद्यादौने
च्छिरोभेदनोत्तरंदर्भैराच्छाद्यव्याहृतिभिरभिमंत्र्यपाषाणंबध्वा ॐस्वाहेतिहृदेन्यसेत्॥ ततोऽग्निनाग्निः स॰ त्वंह्यग्ने अग्निना॰ तंमर्ज-
यंतसुक्रतुं॰ यज्ञेनयज्ञं॰ इत्यृक्चतुष्टयेनचितिः सृगित्यादिभिर्दशहोत्रादिसंज्ञकयजुर्मंत्रैश्चाभिमंत्रयेत्॥ अतोदेवाइतिजपि
त्वापापैर्मुक्ताअश्वमेधादिफलभागिनोवयमितिभावयंतोवभृथबुध्यासर्वेनुगामिनः स्नात्वागंधादिधृत्वासोत्सवागृहंगच्छेयुः॥ अत्रप
रमहंसस्यस्थलेसमाधिर्मुख्यः॥ जलेमध्यमः कुटीचकंतुप्रदहेत्सूरयेच्चबहूदकं॥ हंसोजलेतुनिक्षेप्यः परमहंसंप्रपूरयेदितिवच
नात्॥ अत्रपरमहंसंप्रकीरयेदितिक्वचित्पाठः॥ एकोद्दिष्टंजलंपिंडमाशौचंप्रेतसत्क्रियां॥ नकुर्यात्पार्वणादन्यद्ब्रह्मीभूताययस्य

ध॰सिं॰ ये॥ कुटीचकातिरेकेणनदहेद्यतिनंकचित्॥ततःकर्त्तास्नात्वाचम्यर्षासिद्धिंगतस्यब्रह्मीभूतभिक्षोस्तृप्त्यर्थंतर्पणंकरिष्येइतिसंकल्प प॰उ॰
८१ सव्येनदेवतीर्थेनैवात्मानमंतरात्मानंपरमात्मानमितिचतुश्चतुस्तर्पयित्वाशुक्लपक्षेभूतस्यकेशवादिद्वादशनामभिः कृष्णपक्षेमृ २
तस्यसंकर्षणादिद्वादशनामभिःकेशवंतर्पयामीत्येवंद्वितीयांतैः कुर्यात्॥ इदंक्षौरणानिकेचित्॥ततःसिद्धिंगतस्यभिक्षोस्तृप्त्यर्थं
नारायणपूजनंबलिदानंघृतदीपदानंचकरिष्येइतिसंकल्प्यदेवयजनोपरिरितिरेवामृन्मयलिंगंकृत्वापुरुषसूक्तेनाष्टाक्षरेणच
षोडशोपचारपूजांकृत्वाघृतमिश्रपायसबलिंदत्वाघृतदीपंचसमर्प्यपायसबलिंजलेक्षिपेत्॥ततॐनमोब्रह्मणेनमइतिशं
खेनाष्टार्घ्यान्दत्वागृहंव्रजेदितिप्रथमदिनकृत्यं॥एवंदशादिनांतंप्रत्यहंतर्पणंलिंगपूजनपायसबलिदीपदानानिकुर्यात्॥अथै
कादशेहनिपार्वणश्राद्धं॥ तत्रमध्यान्हेनद्यादौश्राद्धांगतिलतर्पणंकृत्वादेशकालौस्मृत्वाप्राचीनावीतीअमुकगोत्रस्यामुकशर्म
णोब्रह्मीभूतस्यास्मत्पितुःकरिष्यमाणदर्शादिसर्वश्राद्धाधिकारार्थमाद्यपार्वणश्राद्धंकरिष्येइतिपुत्रादिःसंकल्पयेत्॥शिष्यस्तु
ब्रह्मीभूतस्यगुरोःप्रत्यब्दादिश्राद्धाधिकारार्थंतत्पितृसंबंधिनामगोत्रोद्देश्यतासिध्यर्थंचपार्वणश्राद्धमितिसंकल्पयेत्॥अन्यत्स
मानं॥पुरूरवार्द्रवसंज्ञकाविश्वेदेवाःपितृपितामहप्रपितामहानांनामगोत्रादिसहितानामुच्चारः॥सर्वत्रपितुर्ब्रह्मीभूतइतिवि १
शेषणमात्रमधिकंशेषंप्रत्यब्दश्राद्धवत्॥केचित्शिष्यःकर्ताचेदात्मांतरात्मपरमात्मनउद्दिश्यसाधुरुरुसंज्ञकदेवयुतसव्येनदेवत

मेकंनांदीश्राद्धवदेकादशाहे पार्वणश्राद्धंकुर्यादित्याहुः॥ अत्रसर्वत्रविस्तरस्तोरोक्तसन्यासपद्धतौद्रष्टव्यः॥ अथद्वादशाहेनारा
यणबलिः॥ देशादिस्मृत्वासिद्धिंगतस्यभिक्षोः संभावितसर्वपापक्षयपूर्वकंविष्णुलोकावाप्तिद्वाराश्रीनारायणप्रीत्यर्थंनारायणबलिं
करिष्येइतिसंकल्प्यत्रयोदश यतीन्विप्रान्वानिमंत्र्यशक्तौपक्षेकेशवरूपीगुर्वर्थेत्वयाक्षणःकर्तव्यइत्येवंदामोदरांतकेशवादिद्वा
दशनामभिः क्षणोदेयः कृष्णेतुसंकर्षणादिद्वादशनामभिस्त्रयोदशंविप्रंविष्ण्वर्थेत्वयाक्षणःकर्तव्यइतिनिमंत्र्यपादान्प्रक्षाल्यप्राङ्मु
खानुपवेशयेत्॥ विप्राग्रेस्थंडिलेग्निप्रतिष्ठापनादि अन्वाधानेचक्रुष्याज्येनेत्यंते ऽग्निंवायुंसूर्यंप्रजापतिंचव्यस्तसमस्तव्याहृति
भिरेकैकपायसाहुत्वाविष्णुर्मतोदेवाइतिषड्भिः प्रत्यृचमेकैकपायसाहुत्वानारायणपुरुषसूक्तेनप्रत्यृचमेकैकपायसाहुत्वाशक्तौके
शवादिद्वादशदेवताः कृष्णेसंकर्षणादिद्वादशदेवताः एकैकपायसाहुत्वाशेषेणेत्यादिद्विपंचाशदधिकशतमुष्टिनिरूप्यबलिपर्या-
मतंडुलानोप्याष्टत्रिंशदाहुतिपर्याप्तंपुरुषाहारमितिविष्णुनैवेद्यपर्याप्तंचक्षीरेश्रपयित्वाज्यभागांतेग्निपूर्ववतः शालग्रामेविष्णुंपु-
रुषसूक्तेनाष्टाक्षरेणचषोडशोपचारैः संपूजस्त्रुचाहस्तेनवान्वाधानानुसारेणहोमत्यागौविदध्यात्॥ एवंशक्तौकृष्णभेदेन
केशवादिद्वादशांताः संकर्षणाद्यंतावाष्टत्रिंशदाहुतीर्हुत्वास्विष्टकृदादिहोमशेषंसमाप्यपुनः शालग्रामंसंपूज्यविष्णुगायत्र्याविष्णा
वेर्ध्यंदत्वाहुतशेषपायसेनविष्णावेबलिंदत्वानिमंत्रितत्रयोदशविप्रान्केशवादिक्रमेणकेशवरूपीगुरवेनमइदमासनमित्यादिनासन

धर्मसिं॰ गंधपुष्पधूपदीपाच्छादनानिदत्वात्रयोदशविप्रंपुरुषसूक्तेनप्रत्यृचंतेविष्णवेनमइत्येवमादिनाविष्णुंदीपांतोपचारैःपूजयेत्॥ चतुर प॰उ॰
८२ स्त्रमंडलेषुत्रयोदशभोजनपात्राण्यासाद्योपस्तीर्यान्नंपरिविष्य पृथिवीतेपात्रमित्यादिनाकेशवादिद्वादशोद्देशेनविष्णूद्देशेन चान्नंत्य ३
क्त्वाअतोदेवा॰ ॐ तद्ब्रह्म ॐ तद्वायुर्ब्रह्मार्पणमित्याद्यापोशानादि प्राणाहुत्यंतेनारायणाद्युपनिषद्भागान्पठेन्नृसिंहंभ्रांतेआचांतेषुभाग
ग्रान्दर्भानास्तीर्याप्सरेणाक्षतोदकंदत्वाकेशवरूपिणेगुरुवेयंपिंडस्वाहानममइत्येवंद्वादशपिंडान्दद्यात्॥ कृष्णोत्तुसंकर्षणादिनामभि
रितिसर्वत्र॥ पिंडेविष्णुंसंपूज्यपुरुषसूक्तेनस्तुत्वाविसर्जयेत्॥ विप्रेभ्यस्तांबूलदक्षिणादिदत्वात्रयोदशविप्रायनाभ्याआसीदित्सा पृक्कयेण
फलतांबूलदक्षिणादिदत्वानमस्कृत्यतांशालग्राममूर्तिमाचार्यायदद्यात्॥ इतिनारायणबलिः॥ अथद्वादशाहेत्रयोदशाहेवाप्ययमाचारमारा
धनं॥ तत्रप्रयोगः॥ देशकालौस्मृत्वाश्रीनारायणप्रीत्यर्थमाराधनंकरिष्येइतिसंकल्प्य॥ गुर्वर्थेक्षणःकर्तव्यः॥ एवंपरमगुर्वर्थेपरमेष्ठिगु
र्वर्थेपरात्परगुर्वर्थे॥ एवंविप्रचतुष्टयंनिमंत्र्यशक्तौकेशवादिनामभिः कृष्णौसंकर्षणादिनामभिःद्वादशविप्रान्निमंत्रयेत्॥ एवंषोडशविप्राः
यतयोवा॥ अशक्तौयथाशक्तिविप्रान्निमंत्र्ययथायथंषोडशक्षणादेयाः॥ षोडशानांपादप्रक्षालनंकृत्वाचम्यपादप्रक्षालनोदकंपात्रांतरेगृहीत्वा
गंधपुष्पादिभिःपूजयेत्॥ विप्रान्प्राङ्मुखानुदङ्मुखान्वोपविश्यषोडशोपचारैर्गंधादिपंचोपचारैर्वासंपूज्य॥ सपरिकरमन्नंपरिविष्यगाय- ८२
त्र्याप्रोक्ष्यगुरवेइदमन्नंपरिविष्टंपरिवेक्ष्यमाणंचातृप्तेःस्वाहाहव्यंनमम॥ एवंपरमगुर्वादिभ्यःपंचदशभ्योन्नत्यागंकृत्वाब्रह्मार्पणमित्यादि

भक्तेष्वाचांतेषु तांबूलदक्षिणावस्त्रादिभिः पूजयेत्॥ अत्र केचित्सूर्वस्थापितपादोदकतीर्थपूजांकुर्वंति॥ तद्यथा तीर्थपात्रं तंडुलादिकृत
मंडले संस्थाप्य पुरुषसूक्तेन तीर्थराजाय नम इति षोडशोपचारैः संपूज्य तत्पात्रं शिरसि धृत्वा बंधुभिः सह विप्रान्प्रदक्षिणीकृत्य गुरुर्ब्र-
ह्मा गुरुर्विष्णुरिति नत्वा प्रथमं विप्रहस्तात्तत्तीर्थं पिबेत्॥ तत्र मंत्रः॥ अविद्यामूलशमनं सर्वपापप्रणाशनं॥ पिबामि गुरुपत्तीर्थं पुत्रपौ
त्रप्रवर्धनमिति॥ कर्मेश्वरार्पणं कृत्वा स्वतः दद्यतो भुंजीत॥ वर्षपर्यंतं प्रतिमासं मृततिथावेवमेवाराधनं कार्यं नतु प्रतिमासिकश्राद्धं॥ प्र
त्यब्दं तु पार्वणश्राद्धं कृत्वाराधानमपि कार्यं॥ ततो दर्शमहालयादिश्राद्धान्यपि सर्वसाधारण्येन कार्याणि॥ न तत्र विशेषः॥ इत्याराधनवि
धिः॥ अत्र नारायणबलि पार्वणश्राद्धयोरेकदिनानुष्ठानपक्षे एकादशे द्वादशे वा दिने पूर्वं नारायण बलिं कृत्वा ततः पार्वणश्राद्धं कार्यं॥
दिनद्वयेकरणपक्षे त्वेकादशे पार्वणं द्वादशे नारायण बलिर्द्वादशे त्रयोदशे वा दिने आ राधनं॥ ऊनमासिकादिकालेष्वप्याराधानमिति के
चित्॥ प्रतिमासमाराधनमित्यन्ये॥ पार्वणश्राद्धं त्वेकादशाहप्रत्यब्दयोरेव॥ तच्च पुत्रादीनामेव नियतं शिष्यादीनां तु नावश्यकं॥ अपु
त्रयतेस्तु शिष्येणापि प्रत्यब्दं पार्वणश्राद्धं कार्यं तदर्थं च नामगोत्रोल्लेखाधिकारार्थमेकादशेऽपि शिष्येण पार्वणश्राद्धं कार्यं॥ नारायणबल्यादे
र्द्वादशाहादावसंभवे शुक्लपक्षस्थ द्वादशी श्रवणपंचम्यः पूर्णिमामावास्या चेति गौणकालाः॥ अत्र पूर्वपूर्वः श्रेयान्॥ भार्याकन्यास्नुषादः
स्त्रिया यतिसंस्कारकर्तृत्वे तु विधवाया वपनपूर्वकं कृच्छ्रत्रयाचरणं सधवायास्तु कृच्छ्राचरणमेव॥ देशांतरस्थः पुनः पितुर्यतेः सिद्धि

वार्तांश्रुत्वावपनपूर्वकस्नात्वाक्षीरतर्पणपूजनादिदशाहंतंकृत्वैकादशाहादौपार्वणनारायणबल्यादिसर्वमविकृतंकुर्यात्॥सन्निहिते
नज्येष्ठेनकृतंचेत्कनिष्ठोनकुर्यात्॥शुक्लकृष्णादिभेदेनकेशवादिनामानिमृततिथ्यनुरोधेनैवग्राह्याणि नतुवार्ताश्रवणतिथ्यनुरोधेन
॥मृततिथ्यज्ञानेतुवार्ताश्रवणानुरोधेनैव॥यतिसंस्कारकरणेश्वमेधसहस्रादिफलं॥असंस्कृतंविशीर्येतयतेर्यत्रकलेवरं॥धर्मलो
पोभवेत्तत्रदुर्भिक्षंमरणंतथा॥दिवंगतेगुरौशिष्यउपवासंतदाचरेत्॥नस्नानमाचरेद्भिक्षुःपुत्रादिनिधनेश्रुते॥पितृमातृक्षयंश्रु
त्वास्नानाच्छुध्यतिसांबरः॥अथप्रसंगाद्यतिधर्माः॥प्रातरुत्थायब्रम्हणस्पतइतिजपित्वादंडादीनि मृदंचादायमूत्रपुरीषयोर्गृह
स्थचतुर्गुणंशौचंकृत्वाचम्यपर्वद्वादशीवर्ज्यंप्रणवेनदंतधावनंकृत्वामृदाबहिःकटिंप्रक्षाल्यजलतर्पणवर्ज्यंस्नात्वापुनर्जंघेप्रक्षा
ल्यावस्त्रादीनिगृहीत्वाप्रणवेनप्राणायाममार्जनादिकृत्वाकेशवादिनमोंतनामभिस्तर्पयित्वाभूस्तर्पयामीत्यादिव्यस्तसमस्तव्याहृतिभि
र्महर्जनस्तर्पयामीतितर्पयेत्॥अत्रविशेषोमाधवादौविश्वेश्वर्यादौचज्ञेयः॥सूर्योपस्थानादिकंत्रिकालविष्णुपूजादिकंचसिंधौज्ञेयं
॥विधूमेसन्नमुसलेव्यंगारेभुक्तवर्जने॥कालेपराण्हेभूयिष्ठेनित्यंभिक्षांयतिश्चरेत्॥अत्रभिक्षाभेदाग्रंथांतरेज्ञेयाः अत्रविविदिषो
र्दंडिनोमाधुकरीमुख्या॥दंडवस्त्रादिपरिग्रहणरहितस्यतुकरपात्रंमुख्यं॥अन्येपक्षाअशक्तविषयाः॥तत्रमाधुकरीपक्षेदंडादिगृही ८३
त्वापंचभ्यःसप्तभ्योवागृहेभ्योभिक्षांयाचयित्वान्नंप्रोक्ष्यभूःस्वधानमइत्यादिव्यस्तसमस्तव्याहृतिभिःसूर्यादिदेवेभ्योभूतेभ्यश्चभू

मौक्षिप्त्वाशेषमन्नंविष्णुनिवेदितंभुंजीत॥ चंडीविनायकादिनैवेद्यंभुंजीत॥ भुक्त्वान्यषोडशप्राणायामान्कुर्यादितिसंक्षेपः॥ यतिह-
स्तेजलंदद्याद्भिक्षांदद्यात्पुनर्जलं॥ भैक्ष्यंपर्वतमात्रंस्यात्तज्जलंसागरोपमं॥ एकरात्रंवसेद्ग्रामेनगरेपंचरात्रकं॥ वर्षाभ्योन्यत्रवर्षासुमासां
श्चचतुरोवसेत्॥ अष्टौमासान्विहारःस्याद्यतीनांसंयतात्मनाम्॥ महाक्षेत्रप्रविष्टानांविहारस्तुनविद्यते॥ भिक्षाटनंजपस्नानंध्यानंशौ
चंसुरार्चनं॥ कर्तव्यानिषडेतानिसर्वथानृपदंडवत्॥ मंचकंशुक्लवस्त्रंचस्त्रीकथालौल्यमेवच॥ दिवास्वापश्चयानंचयतीनांपतना-
निषट्॥ वृथाजल्पंपात्रलोभंसंचयंशिष्यसंग्रहम्॥ हव्यंकव्यंतथान्नंचवर्जयेच्चसदायतिः॥ यतिपात्राणिमृद्वेणुदार्वलाबुमयानिच-
॥ नतीर्थवासीनित्यंस्यान्नोपवासपरोयतिः॥ नचाध्ययनशीलस्यान्नव्याख्यानपरोभवेत्॥ एतद्वेदार्थभिन्नपरं॥ एतेसंक्षेपतोयतिधर्माः
॥ अन्येपिमाधवीयमिताक्षरादौज्ञेयाः॥ प्रथमेत्रपरिच्छेदेकालसामान्यनिर्णयः॥ द्वितीयेथपरिच्छेदेविशेषात्कालनिर्णयः॥ तृतीयस्यच
पूर्वार्धेगर्भाधानादिसत्क्रियाः॥ आह्निकंचप्रकीर्णार्थाआधानाद्याःसविस्तराः॥ देवप्रतिष्ठाशांत्यादिनित्यंनैमित्तिकंतथा॥ तार्तीयिकोत्तरा
र्धेस्मिन्जीवत्पितृकनिर्णयः॥ श्राद्धाधिकारकालादेर्निर्णयश्श्राद्धपद्धतिः॥ सूतकादेर्निर्णयश्चनिर्णयोदुर्मृतावपि॥ अंत्येष्टिसंस्कारविधिः
संन्यासःसहविस्तरः॥ प्रायश्चित्तंव्यवहृतिंसर्वदानविधिंविना॥ ५॥ कृत्स्नोपिधर्मशास्त्रार्थःसंक्षेपेणात्रनिर्मितः॥ विबुधानांचबालानां
तुष्टयेकष्टहानये॥ ६॥ मूलभूतानिपद्यापिविकृतानिक्वचित्क्वचित्॥ निर्विकाराण्यपिनवान्यप्युक्तान्यत्रकानिचित्॥ ७॥ मीमांसाधर्म-

शास्त्रज्ञाःसुधियोनलसाबुधाः॥ कृतकार्याःप्राङ्निबंधैस्तदर्थंनायमुद्यमः॥८॥ येपुनर्मंदमतयोलसाअज्ञाश्चनिर्णयंधर्मंवेदितुमिच्छंतिरु-
चिसस्तदपेक्षया॥९॥ निबंधोयंधर्मसिंधुसारनामासुबोधनः॥ अमुनाप्रीयतांश्रीमद्विठ्ठलोभक्तवत्सलः॥१०॥ प्रेम्णासद्भिर्ग्रंथःसेव्यःशब्दा
र्थतःसदोषोपि॥ संशोध्यवापिहरिणासुदाममुनिसतुषपृथुकमिष्टिरिव॥११॥ श्रीकाश्युपाध्यायवरोमहात्माबभूवविद्वद्द्विजराजराजः॥
तस्मादुपाध्यायकुलावतंसोयज्ञेश्वरोनंतइमावभूतां॥१२॥ यज्ञेश्वरोयज्ञविधानदक्षोदैवज्ञवेदांगसुशास्त्रशिक्षः॥ भक्तोत्तमोनंतगुणैकु-
धामानंताह्वयोनंतकलावतारः॥१३॥ एषोत्यजज्जन्मभुवंस्वकीयांतांकौंकणाख्यांसुविरक्तिशाली॥ श्रीपांडुरंगेवसतिंविधायभीमातटेमु
क्तिमगात्सुभक्त्या॥१४॥ तस्यानंताभिधानस्योपाध्यायस्यसुतःकृती॥ काशीनाथाभिधोधर्मसिंधुसारंसमातनोत्॥१५॥ ॥ इतिश्री
मत्काश्युपाध्यायसूरिसूनुयज्ञेश्वरोपाध्यायानुजानंतोपाध्यायसूरिसूनुकाशीनाथोपाध्यायविरचितेधर्मसिंधुसारेतृतीयपरिच्छेदेउत्तरार्धं
समाप्तम्॥ ॥ श्रीपांडुरंगार्पणमस्तु॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥

पुण्यांतविठ्ठलसखारामअग्निहोत्रीयाणींआपलेशिलायंत्रछापावरछापिला॥ शके१७९२
प्रमोदनामसंवत्सरे॥ श्रावणशुक्लएकादश्यांरवौसमाप्तः॥ आवृत्ती २

इतिश्रीकाशीनाथोपाध्यायविरचितेधर्माब्धिसारेतृतीयपरिच्छेदः समाप्तिमगमत् ॥